स्याऽन्यसकाशेऽधीतमन्यं व्यपदिशतो जायते । दर्शनस्यापि सम्मत्यादिदर्शनप्रभावकशास्त्राण्यधिकृत्यैवमेव द्रष्टव्यः । अत्याशातना तु ज्ञानस्य ।

काया वया य ते चिय, ते चेव पमाय अप्पमाया य । मोक्खाहिगारियाणं, जोइसजोणीहिँ किं कज्जं ॥ २७ ॥

दर्शनस्य तु किमेभिः सम्मत्यादिभिः कलहशास्त्रैरिति । ३ तथा न पठ्यते—

वादांश्च प्रतिवादांश्च, वदन्तो निश्चितांस्तथा । तत्त्वान्तं नाधिगच्छन्ति, तिलपीलकवद्गतौ ॥ २८ ॥

अन्तरायं द्वयोरपि कलहस्वाध्यायादिभिः करोति । ज्ञानविसंवादयोगाऽकालस्वाध्यायादिना पट्टिकापुस्तिकादिपातनेन च दर्शनविसंवादयोगस्तु शङ्काकाङ्क्षादिना । चारित्रविराधना सावद्ययोगानुमत्यादिलक्षणविचित्रा तां च जिह्वया प्ररूपयति । स्पर्शनेन्द्रियमप्रशस्तम्, स्त्र्याद्यालिङ्गनाद्यशुभाध्यवसायहेतुतया यद्दुर्गतिनिबन्धनम्, प्रशस्तं च यद् जिन[1]पूजास्नपनादिषु गुरु-ग्लान-बाल-शिक्षक-क्षपकादीनां वैयावृत्त्ये उपयुज्यते अतोऽप्रशस्तैर्यद्बद्धमिति प्रक्रमः । तथा कषायेषु, क्रोधोऽप्रशस्तो दुर्वचना-ऽवर्णवादादिभिः प्रेरितस्याविवेकिन आत्मनः परेषां च सन्तापहेतुः प्रशस्तश्च दुर्विनीतपरिजनशिक्षायां, यद्वा क्रोधोऽयं स्वपरोभयेषामिह परत्र च अनर्थहेतुरिति तदुच्छादनबुद्धिः प्रशस्तता । तथा च—

अपकार(रि)णि कः कोपः, कोपे कोपः कथं न ते । धर्मार्थकाममोक्षाणां, प्रसह्य परिपन्थिनि ॥ २९ ॥

अप्रशस्तमानश्च नमनाऽर्हत्स्वपि गुर्वादिष्वनमनशीलता, प्रशस्तश्चासौ यत् सत्पुरुषप्रतिज्ञाया आजन्मनिर्वाहः । तथा च—

१ जिनपूजायां यत् स्नपनं इति विग्रहः ॥

थादमति- सूत्रे ॥ २१ ॥



विपद्युच्चैः स्थेयं पदमनुविधेयं च महतां, प्रिया न्याय्या वृत्तिर्मलिनमसुभङ्गेऽप्यसुकरम् ।
असन्तो नाभ्यर्थ्याः सुहृदपि न याच्यस्तनुधनः, सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ॥ १० ॥

आपत्स्वदीनवृत्तिः, यतः—

आपत्सु सम्पतन्तीषु, पूर्वकर्मनियोगतः । धैर्यमेव परित्राणं, न युक्तमनुशोचनम् ॥ ११ ॥

तथा विपन्नदशापतितेष्वपि निजमर्यादाऽनतिक्रमः, यतोऽवाचि—

निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु, लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम् ।
अद्यैव वा मरणमस्तु युगान्तरे वा, न्याय्यात् पथः प्रविचलन्ति पदं न धीराः ॥ १२ ॥"

मायाऽप्रशस्ता परद्रव्याकाङ्क्षया परवञ्चना [1]वणिजकानामिन्द्रजालिकानां वा ज्ञेया, प्रशस्ता च स्वपरोभयेषामायतिहिताय यदुक्तम्—

"अमाय्येव हि भावेन माय्येव तु भवेत् क्वचित् । पश्येत् स्वपरयोर्यत्र, सानुबन्धं हितोदयम् ॥ १३ ॥"

तथा व्याधानां मृगापलपने व्याधिमतां कटुकौषधादिपाने दीक्षोपस्थितस्य विघ्नकरपित्रादिस्वजनानां पुरतः कुस्वप्न[2] मया दृष्टमल्पायुष्कसूचकमित्यादिका वा । लोभः प्रशस्तः ज्ञान-दर्शन-चारित्र-विनय-वैयावृत्त्य-शिष्यसङ्ग्रहाद्युचितः, अप्रशस्तो धन-धान्यादिषु मूर्च्छाभावः सर्वापदां कारणम् । एतेषु चैकैकोऽपि दुःखहेतुः किं पुनः समुदिताः । ॥ २१ ॥

[1] 'वाणिजकाना° सं २ ॥ [2] कुस्वप्नो मया दृष्टोऽल्पा° सं१ ॥

योगेऽप्यप्रशस्तं मनोऽजरामरत्वदेशाभिधानविद्याधरेन्द्रक्रीडादिचिन्तनगोचरम्, प्रशस्तं तु जीवाजीवादिपदार्थचिन्तनविषयम् । वागप्यप्रशस्ता जार-चौर-शाकिन्याद्युच्चारणविषया परपीडाकरी तथा चोक्तम्—

"अलियं न भासियव्वं, अत्थि हु सच्चं पि जं न वत्तव्वं । सच्चं पि तं न सच्चं, जं परपीडाकरं वयणं ॥ ३४ ॥"

प्रशस्ता वाक् जिनगुण-श्रुतवर्णनगोचरा । कायाऽप्रशस्तता स्त्रीभोग-द्यूतरमण-श्व-कुक्कुटादियोधन-जलान्दोलनक्रीडादिविषया । इतरा तु जिनपूजन-गुरु-साध्वादिविश्रामणादिगोचरा । एतैरिन्द्रियकषाययोगादिभिरप्रशस्तैर्यद्बद्धं । ननु ज्ञानदर्शनातिचारप्रतिक्रमणे प्रतिज्ञाते चारित्राचारकतयेन्द्रियकषायादीनां प्रतिक्रमणमप्रस्तुतम्, अत्रोच्यते—ननु प्रस्तुतमेवेदं यतोऽभिहितम्—'तज्ज्ञानमेव न भवति, यस्मिन्नुदिते विभाति रागगणः।' इत्यादि, अन्यच्च—

"वट्टंति वसे नो जस्स इंदियाइं कसायवग्गो य । निच्छयओ अन्नाणी, नाणासत्थे मुणंतो वि ॥ ३५ ॥

इत्येवमिन्द्रियार्थकषायवशवर्तितया प्रवर्तमानस्य श्रावकस्य ज्ञानातिचारता भावनीया । एवं ज्ञानाद्यतिचारजकर्मबन्धनिन्दनपरतया गाथार्थो व्याख्यातः । यद्वा "दुविहे परिग्गहम्मि" इत्यनया गाथया पञ्चाणुव्रतातिचारप्रतिक्रमणमभिधाय, शेषव्रतातिचारप्रतिक्रमणं कर्तुकामः सम्प्रति गुणव्रतातिचारविषयं तत् 'सूत्रयति "जं बद्धम्" इत्यनया गाथया । तत्र दिग्व्रतमागमने निर्गमने इति वक्ष्यमाणगाथोक्तपदे आविर्भावितम् । यत ऊर्ध्वाधस्तिर्यग्दिक्त्रये गमनागमनादिकं नियमितक्षेत्राद्बहिः कुर्वतो दिग्व्रतातिचारभावादसौ सूचितः । द्वितीयगुणव्रतातिचारमाह—यत् 'बद्धं'

१ सूचयति सं२ ॥

नियमितं वस्तु खण्डितमर्थादुपभोगव्रते । तथाहि 'इन्द्रियरि' ति जिह्वेन्द्रियेण रसलौल्यवशातोऽविवेच्य प्रत्याख्यान खण्डितमसदनुष्ठित भोजने अतिक्रमादिना । स्पर्शनेन्द्रियेण परिभोगे शेषेन्द्रियैश्च घ्राण-चक्षुः-श्रोत्राख्यैर्यथार्हमिति तथाऽर्थादनर्थदण्डविरतौ यद् 'बद्ध'–खण्डितं कैः? इत्याह—कषायैरिति आत्मस्वरूपं कषति–हिनस्ति, पचादित्वाद् अचि कषः, ज्ञानादिगुणक्षयोऽयो वा, स ईयते–अन्तर्भूतेनर्थत्वात् प्राप्यते एभिः कृत्वा जीवेन कर्माणि करणे वा घञि कषाया अपध्यानादयः । कियद्भिस्तैः? इति आह—'चतुर्भिः' इति अपध्यान-प्रमादाचरित-हिंस्रप्रदान-पापकर्मोपदेशै-रिति । अत एवानर्थदण्डत्वेन अप्रशस्ते आत्मपरिणामे यद् बद्धम् अनर्थदण्डे कर्मोपचितम् तैः कथं बद्धं? "रागेण व दोसेण व" त्ति ताभ्यां कृतैरित्यर्थः । तत्र रागस्त्रिधा दृष्टि-स्नेह-विषयानुरागतः तत्र दृष्टिषु शाक्यादिकुप्रवचनरूपा-स्वनुरागो गोविन्दवाचकस्येव दृष्ट्यनुरागः । धन-सुत-धान्यस्वजनादिषु स्नेहः–प्रतिपन्नस्तद्रूपोऽनुरागः स्नेहानुरागः । विषयेषु शब्दरूपादिषु प्रतिपन्नो–गार्ध्यं तद्रूपोऽनुरागः विषयानुरागः इति, दृष्ट्यादिरूपेण त्रिविधेन रागेण धनस्व-जनाद्युपघातकारिण्यप्रीतिरूपेण द्वेषेण गोष्ठामाहिल-त्रैराशिकयोरिव यद्बद्ध 'वा' विकल्पार्थः ह्रस्वत्वं प्राकृतत्वात् तद-बद्धस्य प्रतिक्रमणार्हत्वादाह—'तं निन्दे तं च गरिहामि' तमिति उपभोगपरिभोगव्रते यद्बद्धं तमिति, 'तं च' इति अन-र्थदण्डविरतौ च यद्बद्धं तं निन्दामि गर्हामि च । अत एवार्थद्वयसूचकं 'तं तं च' इति । बद्धशब्देनातिचारोक्तेन दैशि-कमित्युक्तम्, वक्ष्यमाणतयाऽप्यापि सम्पूर्णदिग्व्रतानुक्तेर्न सर्वगुणव्रतम्, इत्यर्थद्वयपरचतुर्थगाथार्थः ॥ ४ ॥

अधुना शिक्षाव्रतातिचारप्रतिक्रमणायाह—

आगमणे निग्गमणे ठाणे चंकमणे अणाभोगे । अभिओगे य नियोगे, पडिक्कमे देसियं सव्वं ॥ ५ ॥

व्या०—दिग्व्रतस्य देशावकासिकव्रतस्य च प्रतिनियतक्षेत्रविषयतया गृहीतस्य तदतिक्रमगोचरतया आगमने निर्गमने च क्रियमाणे योऽतिचारो जातस्तस्य दैशिकं प्रतिक्रामामीति सम्बन्धः । इह लाघवार्थं क्रममनादृत्य गाथाद्यपादेन व्रतद्वयातिचारसूचा कृता । तत्र 'आगमने' आपणादिभ्यो गृहादिषु गमने निर्गमने गृहादिभ्य आपणादिषु गमने कोऽर्थः ? नियमितभूभागाद् यदनियतभूभागे गमनं आगमनं वा अनाभोगादिना, सव्रता[1]तिचारः । स्थाने चङ्क्रमणे—गुणस्थानारोहणे सामायिके कृतेऽनाभोगे—प्रमादवशादनुपयोगे सति योऽतिचारस्तं, अभियोगः—अभ्युद्यमो योगानां वीर्यातिरेकः स चात्र प्रक्रमात् पौषधः तत्र, तथा 'नियोगे' दानेऽतिथिसंविभागे शतं विनियुङ्क्त इति प्रयुक्तिवचनात् सूचनात् सूत्रम् इति कृत्वा तत्रापि चानाभोगे दैशिकं प्रतिक्रामामि सर्वम् इति गुणव्रतशिक्षाव्रतगोचरम् । उक्तं सङ्क्षेपतो "दुविहे परिग्गहम्मि" इत्यादिगाथात्रयेण व्रतद्वादशकातिचारप्रतिक्रमणम् । एतच्च यदत्रैवं गाथात्रयं व्याख्यातं तद् जिनेश्वरसूरिविरचितदुर्गवक्ष्यर्थश्रावकप्रतिक्रमणवृत्त्यनुसारतः, न पुनः स्वमनीषिकयेति ज्ञेयम् । व्रतातिचारोक्त्यनन्तरं मूलगाथोपात्तं ज्ञान-दर्शन-चारित्रातिचारनिन्दनं प्रकृतम् तदपि "जं बद्धमिंदिएहिं" इत्यस्यां ज्ञानदर्शनातिचारनिन्दनमपि भावितं प्राक् । इदानीं दर्शनातिचारं सामान्येन चक्षुर्दर्शनमधिकृत्य "आगमणे निग्गमणे" इतीयमेव गाथा व्याख्यायते अस्यामागमनादीनि षट्पदान्यतिचारगोचराणि । तस्मिन् आगमनादौ सति योऽतिचारस्तं दैवशिकं प्रति-

१ °दिना स्वव्रता° सं.र ॥

भासामीति सम्बन्धः। तत्र आगमनम्—अश्व-गजादीनां देशान्तरतः, निर्गमन—तेषां दर्शनाय राजा-ऽमात्यादीनां सकौतुकं गमनं नगर-ग्रामादेर्बहिः सेना सङ्ग्रामादिसन्दर्शनार्थं च। यद्वा मिथ्यादृष्टिरथ-यात्रादिसन्दर्शनार्थं वा कुतूहलेन गमनं सविस्मयं च निध्यानं साश्चर्यं च तद्वर्णनं यथा—भव्योऽयं रथो यात्रा चेयं शोभना गजाश्वस्वराजादिदर्शने वर्णनं यथा, गजोऽयं मेघ इव गम्भीरस्वरं गर्जन् क्षरन् मदवारिभ्यातः पीनोच्चकुम्भतटोऽतीव शोभते, राजा च धृतधवलातपत्रचतुरङ्गसैन्यपरिवृतो बन्दिवृन्दस्तूयमानगुणो हस्तिस्कन्धाधिरूढ इन्द्र इव शोभत इत्यादि अतिचारता चाप्रशस्तत्वे तस्याध्यवसायात्, तथा च—

"जे मिच्छदंसिणो वि हु, सपरिग्गहजीववहपवत्ता य। अविरयपावा जीवा, कह णु पसंसापय हुंति ॥ ३६ ॥"

क्षणभङ्गुरे संसारे सर्वमेव न सांसारिकं वस्तु प्रशंसास्पदमस्ति। एतेन दृष्टिकी क्रियां प्रतीत्य योऽतिचारस्तस्यापि प्रतिक्रमणमुक्तम्, तथा च तल्लक्षणम्—

"दिट्ठिय किरिया नेया, अस्सरहाईण जीवऽजीवाण। जं दंसणत्थ गमणं, तव्वन्नणयं च कुणओ से ॥ ३७ ॥"

तथा स्थानम्—ऊर्ध्वस्थानम्, एतच्चोपलक्षणं निषीदनत्वग्वर्तनाचङ्क्रमादेः तन्मिथ्यादृष्टिदेवगृहादिषु कुर्वता यद्विहितं तदपि कर्तुं न कल्पते, यतः—

"वेसागिहेसु गमणं, जहा विरुद्धं महाकुलवहूणं। जाणाहि तहा सावय!, सुसावयाणं कुतित्थेसु ॥ ३८ ॥"

चङ्क्रमणम् अतिशयेन शीघ्रतया वा यत् क्रमणं तच्चङ्क्रमणं—इतस्ततो यत्र तत्र परिभ्रमणम् निरोधापनोदाय वा इत-

श्चतश्च परिष्वष्कणं द्रुतद्रुतगमनकरणतः। एतेषु दैशिकमतिचारं निर्वर्त्तितं प्रतिक्रामामि। कस्मिन् निमित्ते? इति आह—'अनाभोगे' प्रमादवशादनुपयोगेऽज्ञानरूपे तथाऽभियोगो नाम राजादिपारवश्यम् तथा चैतेऽभियोगाः पठ्यन्ते—राजगणवलदेवतादिकाः। गणः—स्वजनादिसमुदायस्तदभियोगो-वश्यता। बलाभियोगो-नाम राजगणव्यतिरिक्तस्य बलवतः पारतन्त्र्यम्। देवताभियोगो—देवपरतन्त्रता। राजादिपारवश्येन यत् कृतम्। नियोगो—नाम श्रेष्ठिपदबलाधिकृतत्वादिको व्यापारः एतद्द्वारेण यत् कृतमतिचारजातं तस्य प्रतिक्रामामि दैशिकं सर्वम्, इति प्राग्वदिति पञ्चमगाथार्थः॥ ५॥ सम्प्रति यत्र पक्षे दर्शनं-सम्यक्त्वं तदतिचारप्रतिक्रमणायाह—

संका कंख विगिच्छा, पसंस तह संथवो कुलिंगीसु। सम्मत्तस्सऽइयारे, पडिक्कमे देसियं सव्वं॥ ६॥

व्याख्या—शङ्का, काङ्क्षा, विचिकित्सा, प्रशंसा, तथा संस्तवः कुलिङ्गिषु, एतान् सम्यक्त्वस्यातिचारानाश्रित्य यद्बद्धं यत् कृतं किञ्चित् तस्मात् प्रतिक्रामामि दैशिकं सर्वमिति समुदायार्थः। अवयवार्थस्तूच्यते—तत्र संशयकरणं शङ्का भगवदर्हत्प्रणीतेषु पदार्थेषु धर्मास्तिकायादिष्वत्यन्तगहनेषु मतिदौर्बल्यात् सम्यगनवधार्यमाणेषु संशयः किमेवं स्यात् नैवमिति सा पुनर्द्विभेदा देशशङ्का सर्वशङ्का च। देशशङ्का देशविषया यथा किमयमात्माऽसङ्ख्येयप्रदेशात्मकः स्यादथ निष्प्रदेशो निरवयवो वा इति। तत्र देहव्याप्यात्माऽसङ्ख्येयप्रदेशात्मक इति तत्त्वम्। सर्वशङ्का पुनः सकलास्तिकायादिव्रात एव किमेवं स्यात् नैवं स्यादिति, इह किल संशये सति चित्तमालिन्यमर्हत्प्रवचननाशश्च स च मिथ्यात्वाशत्वाद् अयुक्तः, तथा चोक्तम्—

"एकस्मिन्नप्यर्थे, सन्दिग्धे प्रत्ययोऽर्हति हि नष्टः । मिथ्या च दर्शनं तत्, स चादिहेतुर्भवगतीनाम् ॥ ३९ ॥"

स चेदर्हत्प्रत्ययनाशः । "कंख" त्ति 'काङ्क्षा' अन्योऽन्यदर्शनग्रहोऽभिलापः । एषाऽपि द्विभेदा[1] देशकाङ्क्षा सर्वकाङ्क्षा च । देशकाङ्क्षा देशविषया एकमेव सौगतं दर्शनं काङ्क्षति, चित्तजयोऽत्र प्रतिपादितः अयमेव च प्रधानो मुक्तिहेतुरित्यतो घटमानकमिदम् । सर्वकाङ्क्षा तु सर्वदर्शनान्येव काङ्क्षति, अहिंसाप्रतिपादनपराणि सर्वाण्येव कपिल-कणभक्षा-ऽक्षपादादिमतानि, इह लोके च नात्यन्तक्लेशप्रतिपादनपराण्यतः शोभनान्येवेति । "विगिंछ" त्ति 'विचिकित्सा' मतिविभ्रमः युक्त्यागमोपपन्नेष्वप्यर्थेषु फलं प्रति सम्मोहः, किमस्य महतस्तपः क्लेशायासस्य सिकता(कता)कणकवलनतुल्यस्य चैत्यवन्दनदानाद्यनुष्ठानस्य चाऽऽगामिकाले मम फलसम्पद्विपत्स्यति? किं वा न इति? उभयथेह कृषीवलादिक्रियाः फलवत्यो निष्फलाश्च दृश्यन्ते, न चेयं शङ्कातो न भिद्यते इत्याशङ्कनीयम्, शङ्का हि सकलासकलपदार्थभाक्त्वेन द्रव्यगुणविषया विचिकित्सा क्रियाफलविषयेति भेदः । तत्त्वतस्तु सर्वे एते प्रायो मिथ्यात्वांशानुवेधादज्ञानोदयात् ज्ञेयगहनत्वाच्च भवन्तो जीवपरिणामविशेषाः सम्यक्त्वस्यातिचारा उच्यन्ते, न सूक्ष्मेक्षिकाऽत्र कार्या । ततश्च मुमुक्षुणा व्यपगतशङ्केन सता मतिदौर्बल्यात् ज्ञेयगहनत्वादज्ञानोदयाच्च सदाप्यसदमपि जिनवचनं सत्यमेव प्रतिपत्तव्यं, सर्वज्ञाभिहितत्वात् तदन्यपदार्थवत् । यत उक्तम्—

"तमेव सच्चं निस्संकं, जं जिणेहिं पवेइय ।" ति "विउछ" त्ति पाठे विद्वज्जुगुप्सेति संस्कारः, विद्वांसः—साधवो

१ द्विधाभेदा इति द्वयोः प्रतयोः ॥

विदितसंसारस्वभावाः परित्यक्तसमस्तसङ्गास्तेषां जुगुप्सा–निन्दा, तथाहि—तेऽस्नानात् प्रस्वेदजलक्लिन्नमलिनत्वाद् दुर्गन्धवपुषो भवन्ति तान् निन्दति, को दोषः स्यात् यदि प्रासुकेन वारिणाऽङ्गप्रक्षालनं कुर्वीरन् भगवन्तः इति?, इयमपि न कार्या, देहस्यैव परमार्थतोऽशुचित्वात् । "पसंस" त्ति रजोहरणमुखवस्त्रिकादिकमर्हत्प्रणीतं साधूपलक्षकं[1] सुलिङ्गं चिह्नं, तद्व्यतिरिक्तमभ्यन्तरतोऽतत्त्वाभिनिवेशरागद्वेषकषायान्वितत्वम् । बाह्यतो जटा-भिसिका-त्रिदण्ड-कमण्डलु-रक्ताम्बरादिकम् । लिङ्गं–वेषः समाचारो वा कुलिङ्गं, तद्विद्यते येषां ते कुलिङ्गिनः–शाक्य–जटिलादयो दर्शनिनः तेषु-एतद्विषया प्रशंसा, सर्वज्ञप्रणीतधर्मव्यतिरिक्तानां कुलिङ्गिनां वर्णवादः (कुलिंगि) प्रशंसोच्यते, यथा—पुण्यभाज एते सुलब्धमेषां मानुषं जन्म दयालव एते उग्रतपःकारिणः फलाद्युपभोगिनो वनवासिनो ब्रह्मचर्यरता अतो महाकष्टविधायिन इत्यादि । तथा विभक्तिपरिणामात् तैः कुलिङ्गिभिः–परपाखण्डैः शाक्य-परिव्राजकादिभिः सह यः संस्तवः—संवसन-भोजना-ऽऽलापादिलक्षणः परिचयः । संपूर्वस्तौतेः परिचयार्थे रूढत्वात् । सर्वेष्वपि चित्तमालिन्यार्हद्प्रलयादिदोषादतिचारता । विशेषतो मिथ्यात्वस्थिरीकरणा-ऽतत्त्वश्रद्धान-प्रवृत्तिदोष-तीव्रकर्मबन्धादयः कुलिङ्गिनां प्रशंसायां, परिचयोऽप्ययुक्तः पापमित्रैः सह । तथा च—

"वरं व्याधिर्वरं मृत्युर्वरं दारिद्रसङ्गतम् । वरं वनान्तर्वासो वा, मा पापैः सह सङ्गतम् ॥ ४० ॥"

[2]एते च सम्यक्त्वातिचाराः, तत्र—

---

१ साधूपलक्षणकं सं.१ ॥ २ एव च सं१ ॥

"प्रशस्तः शोभनश्चैव, एकः सङ्गत एव च। इत्येतैरुपसृष्टस्तु, भावः सम्यक्त्वमुच्यते ॥ ४१ ॥"

तस्यातिचरणान्यतिचाराः-असदनुष्ठानविशेषा[1] यैः सम्यक्त्वमतिचरति-मलिनयति विराधयति ते च शङ्कादयः, तथेत्युपलक्षणत्वाद् अमीषामन्येऽपि चानुपबृंहणा-ऽस्थिरीकरण-समानधार्मिकावात्सल्य-तीर्थाप्रभावनाख्या द्रष्टव्याः। तत्र समानधार्मिकः सम्यग्दृष्टिस्तस्य, तुल्यप्रवचनत्वेन साधुः साध्वी श्रावकः श्राविका च समानधार्मिकाः एतेषां कुशलमार्गप्रवृत्तानामुपबृंहणा कर्तव्या, धन्यस्त्वं पुण्यभाक् त्वं कर्तव्यमेवैतद्भवताऽऽरब्धमिति। तद्भाव उपबृंहितव्योऽनुपबृंहणेऽतिचारः। एवं सद्धर्मानुष्ठाने विषीदन् धर्म एव स्थिरीकर्तव्यः, अकरणेऽतिचारः। समानधार्मिकस्य हि आपन्नतोद्धरणादिना वात्सल्यं कर्तव्यं तदकरणेऽतिचारः। एवं स्वशक्त्या धर्मकथादिभिः प्रवचनप्रभावना कार्या तदकरणेऽतिचारः। एते चानुपबृंहणादयो निश्चयनयतः पतिते, व्यवहारतो मलिनीभूते वा सम्यक्त्वे जीवस्य परिणामा भवन्ति नाऽन्यथा। सातिचारं च सम्यक्त्वं न जीवस्य झटिति मोक्षसाधकम्, निरतिचारस्यैव विशिष्टकर्मक्षयहेतुत्वात्। तस्माद् मोक्षार्थिनैते शङ्कादयोऽतिचारा वर्जनीया इति गाथार्थः ॥ ६ ॥ अथ कृतव्रतानतिचारान् विशोध्येदानीं चारित्रमुद्दिश्यानन्तरकृतारम्भजविषयाकृतप्रतिषिद्धकरणा[1]तिचारं निन्दया विशोधयितुमाह—

छक्कायसमारंभे, पयणे य पयावणे य जे दोसा। अत्तट्ठा य परट्ठा, उभयट्ठा चेव तं निंदे ॥ ७ ॥

व्या०—पृथिव्यादयः षट्कायास्तेषां समारम्भः-परितापनं तुलादण्डन्यायेन मध्यग्रहणाद् आद्यन्तौ सरम्भाऽऽ-



१ तिचारनिन्दया घं १ ॥

रम्भावपि सङ्कल्पापद्रावणरूपौ ग्राह्यौ तल्लक्षणमिदम्—

"संकप्पो संरंभो, परितावकरो भवे समारंभो । आरंभो उद्दवओ, सव्वनयाणं विसुद्धाणं ॥ ४२ ॥"

अतः षण्णां कायानां समारम्भ-संरम्भा-ऽऽरम्भेषु सत्सु ये दोषाः—पापानि असदनुष्ठानानि नत्वतीचारा अनङ्गीकृतमालिन्याभावात् । न हि गृहिण आरम्भजवधस्य प्रत्याख्यानमस्ति । गृहीतनियमस्य हि मालिन्यकरणमतिचार उच्यते । षट्कायसमारम्भादयः कस्मिन् कर्तव्ये? 'पचने' स्वयं पाकनिर्वर्तने "पयावणे" त्ति अन्यैः 'पाचने' विधापने चकारादनुमतौ च । दोषाः पृथिव्यादि नवविधजीवोपमर्दरूपा ये कृताः कर्मबन्धनिबन्धनाः, पचन-पाचने च किमर्थम्? इत्याह—'आत्मार्थं' स्वभोगाय 'परार्थं' स्वभोगभिन्नं प्राघूर्णकाद्यर्थं 'उभयार्थं' स्वपरोभयार्थं च । यद्वा पचन-पाचनादयः किमर्थं कृता? अत उच्यते—आत्मार्थाः—आत्मनिमित्ताः साधुवादहेतोः पुण्यहेतोर्वा वनीपक-पाषण्डिक-श्रमणाद्यर्थकृताहारदाने मम पुण्यं भविष्यति । ग्लानादिप्रयोजने साधुमप्युद्दिश्य पचनादयो न दोषाय स्युः । परार्थाः—परनिमित्ता माता-पित्रादेः श्रेयोऽर्थं, उभयार्थाश्च—आत्म-परार्थमिश्राः । द्वेषेण वा साधुनियमभङ्गाय कश्चित् पचनादि कृत्वा दत्ते इति चकाराद् गृह्यते 'एवः' पूरणे, अथवा देशचारित्रान्वितगृहस्थादिभोजनाय षट्कायसमारम्भादिष्वयत्नेनाऽपरिशुद्धजलादिना पचनं कुर्वता कारयता वा ये कृताः षट्जीवनीकायगोचरा आरम्भादयस्तान् निन्दामि । हिंसामात्मार्थपचनेऽपि निन्दति । यस्मात् किल सम्यग्दृशः सावद्यारम्भेषु प्रवर्तमानस्य भावना—

"हियए जिणाण आणा, चरियं मह एरिसं अउन्नस्स । एयं आलप्पालं, अव्वो दूरं विसंवयइ ॥ ४३ ॥"

अतो अविरतेनापि जीवघातादि परिहर्तुमशक्नुवता सानुकम्पेन निष्प्रयोजनपरिहारेण प्रवर्तितव्यम् । न हि अनिमित्तं पृथिव्यादिजीवघातं कुर्वता उपशमादिलिङ्गेष्वनुकम्पा सम्यक्त्वचिह्नरूपाऽऽराधिता भवति । तथा चोक्तम्—

"दट्ठूण पाणिनिवहं, भीमे भवसागरम्मि दुक्खत्तं । अविसेसओऽणुकंपं, दुहावि सामत्थओ कुणइ ॥ ४४ ॥"

तत्र दृष्ट्वा प्राणिसमूहं 'दुःखार्त्तं' शारीरमानसैर्दुःखैरभिभूतं 'अविशेषतः' सामान्येनात्मीयेनात्मीयेतरविभागाभावेन 'अनुकम्पां' दयां 'द्विधाऽपि' द्रव्यतो भावतश्च द्रव्यतः-प्रासुकपिण्डादिदानेन, भावतो-मार्गयोजनया 'सामर्थ्यतः' स्वशक्त्यनुरूपां करोत्यनुकम्पेति सप्तमगाथार्थः ॥ ७ ॥ "जो मे" इत्यादिना संक्षेपेणोक्तो व्रतातिचारो "दुविहे परिग्गहम्मि" इत्यादिना सक्षेपेण तन्निर्देश इत्येवं सम्पिण्डितव्रतातिचारान् विभागेनाऽधुना विभज्य (ग्रं० ५००) प्रत्येकं विवेचयितुमाह—

पंचण्हमणुव्वयाणं, गुणव्वयाणं च तिण्हमइयारे । सिक्खाणं च चउण्हं, पडिक्कमे देसियं सव्वं ॥ ८ ॥

व्या०–तत्र "पंचण्हं" इत्यादिना व्यक्तो व्रतोद्देशः "पढमे" इत्यादिना व्यक्तस्तन्निर्देशः । अनु सम्यक्त्वप्रतिपत्तेः पश्चात् अणवो सर्वविरतिपरिणामापेक्षया लघवोऽणूनि वा अल्पावृत्तया महाव्रतापेक्षया लघूनि व्रतानि नियमरूपाण्यणुव्रतानि । तानि च पञ्च । तत्र पञ्चग्रहणेन सङ्ख्यान्तरव्युदासः, नैकं द्वे त्रीणि चत्वारि षड् वा । तत्र कृषिरिव शालिरक्षार्थं प्राणातिपातव्रतमेवैकम्, अन्येषामेव वृतिरूपत्वादित्येकत्वम्, प्राणातिपातव्रतं नारम्भजे वधे गृहिणाम् । मृषावादव्रतं पञ्चस्वेव कन्यालीकेषु इत्यादिभेदाद् विभिन्नेष्वपि सङ्ख्यान्तरव्युदासेन पञ्चैव । अणुव्रतग्रहणेन च

नामान्तरव्युदासः, यथा नाप्येतानि महाव्रतान्येकदेशेन प्रवृत्तेः । नाप्यननुक्तानि स्पष्टं निगमोपलब्धेः । नाप्येतानि गुणव्रतानि मूलरूपतायाः प्रतिपादनात् । "गुणव्वयाणं च तिण्हमइयारे" त्ति गुणभूतानि व्रतानि, कोऽर्थः ? तेषामेवाणुव्रतानां रक्षागुणहेतुत्वेन व्रतानि-नियमा गुणव्रतानि तथाहि—दिग्गमनमानस्योपभोगपरिभोगमानस्य च करणेनाऽऽद्यव्रतं रक्ष्यते, अनर्थदण्डनिवृत्त्या च द्वितीयम्, एतान्यपि त्रीण्येव । "सिक्खाणं च" इति चकारो गुणानामिव व्रतत्वाकर्षणार्थः । ततः शिक्षा-अभ्यासः तस्या हेतूनि व्रतानि शिक्षाव्रतानि । भवति च सामायिकादिव्रतकरणे आत्मनः प्राणातिपातादिव्रतरक्षायां सुशिक्षितत्वम् "चउण्हं" ति चतुर्णामधिकतराभावात् । पूर्वेषामष्टानां निषेधविषयत्वादेषां च प्रायो विधिरूपत्वाद्भेदः । अन्यच्च "पंचाणुव्वइए धम्मे सत्त सिक्खावइए" इति यदुच्यते शास्त्रेषु तत्र पञ्च मूलगुणाः ससोत्तरगुणाः प्रोक्ताः । मध्येऽभिहितो ह्यतीचारशब्दः 'काकाक्षिगोलकन्यायेन' उभयत्र सम्बध्यते एवं पञ्चानामणुव्रतानां त्रयाणां गुणव्रतानां चतुर्णां शिक्षाव्रतानां सर्वेषामेषां सम्बन्धिन्यतिचारे 'देशिकं' देशोद्भवं सर्वमतीचारं प्रतिक्रामामि । व्रतद्वादशकातिचारान् देशिकान् 'प्रतिक्रामामि' तेभ्यो निवर्तेऽहमिति गाथासमुदयार्थः ॥ ८ ॥

"पंचण्हमणुव्वयाणमि" त्येतत् क्रमशो दर्शयन् प्राणातिपातव्रतातिचारप्रतिक्रमणायाह—

**पढमे अणुव्वयम्मी, थूलगपाणाइवायविरईओ । आयरियमप्पसत्थे, एत्थ पमायप्पसंगेणं ॥ ९ ॥**

व्या०—इहादितोऽणुव्रतादिव्रतद्वादशकस्य तावत् क्रमभणने किञ्चिद्युक्तिमात्रमुच्यते तद्यथा—जीवोपकारकत्वाद् व्रतादेस्तत्त्वनवकेऽप्यादौ किल जीवतत्त्वनिर्देश उक्तः तत्प्रतिपक्षत्वाच्चेपस्याजीवादेरिति जीवविषयव्रतस्य प्राथम्यम् ।

व्रतस्य च प्रतिज्ञारूपत्वात् तस्याश्च पालनेतराभ्यां गुणदोषाविति तद्वो मृषावादाद् दोषान्तरमिति तद्विषयव्रतस्य द्वितीयत्वम् । तथा जीवान् हत्वा मृषामुक्त्वा चाऽदत्तमादीयते अतस्तद्भयपूर्वकत्वाद् अदत्तादानस्य [ तद्विषयव्रतस्य ] तृतीयत्वम् । हिंसा मृषयोश्चौर्योऽनन्तर सम्भवेऽपि नात्याऽऽसत्त्वं तयोरात्यप्रतिपादनात् । जीवाजीवेनाऽदत्तग्रहणाच्च, जीवहिंसाविषयव्रतस्यानन्तरमेव । अदत्तादाने चावश्यम्भावी परिग्रह, पोषितोऽपि परिग्रहत्वात् तदनन्तर तु परिग्रहस्य किल युज्यते तथाऽप्यब्रह्मणः सर्वानर्थनिबन्धनत्वात् परिग्रहांशोऽप्यब्रह्माविषयो निरन्तरणीयोऽतोऽस्य प्राथम्यं, किन्तु यतोऽब्रह्मनिबन्धत्वात् शेषपरिग्रहस्यापि उपकारकत्वम् तदुक्तम्—

"अर्थे प्राणाः स्त्रियो भोगाः, शेषमन्यत्परिच्छदः । परिच्छदो विलासाय, विलासाः स्त्रीमनोजनाः ॥ ४५ ॥" तथा—

"महइविहवीविसेसे, ठिइमेत्तो चेयविहरो महइ । सग्गइ सरीरसघणो, रोगी जीइत्थिय कयत्थे ॥ ४६ ॥"

इति परिग्रहादब्रह्माविषयव्रतस्य चतुर्थत्वम्, शेषपरिग्रहस्यार्थात् पञ्चमत्वम् । तदनु अणुव्रतपञ्चकोपका(का)रकत्वाद् प्रतिषेधविधिविषयत्वात् च सप्तशिक्षाव्रतोक्तिः । अथ श्रावकधर्मे सर्वव्रतोपकारकं सामायिकमेव प्रथमम् प्राणातिपातव्रतस्य किम् ? इति नोच्यते येन मूलगुणानामादावुपादानमुक्तम्, उच्यते, प्राणातिपातादिव्रतस्य विशेषिते विषये त्रिविधं त्रिविधेनेति भावात्, तथा प्राणातिपातादि स्वयं मनसा न करोति १ वाचाऽन्यं न कारयति मनसा कायेन वाचा वा न करोति इत्यादिभङ्गकपूर्णं स्याद् न सामायिकस्य, तत्र द्विविधत्रिविधभङ्गकस्यैव सम्भवात् तेन मूलगुणानां प्रथममुपादानम् । प्रतिषेधविषयतासाम्यात्, तदनन्तर गुणव्रतत्रयस्योपन्यासः । विधिरूपाणां मध्ये सर्वाणुव्रत—

गुणव्रतोपकारकत्वेन सामायिकस्यादावुपन्यासः । तदनु च मूलगुणोपकारकदिग्व्रतोपभोगपरिभोगव्रतोपकारकस्य च देशावकाशस्य । पौषधं तूपभोगपरिभोगसामायिकोपकारीति तृतीयम् । तथाहि—आहारपौषधं उपभोगस्योपकारि शरीरसत्कार-ब्रह्मचर्यं परिभोगस्य अव्यापारः सामायिकस्येति । पौषधिकेन त्ववश्यमतिथिसंविभागं कृत्वा पारणीयमित्यतिथिसंविभागस्योपन्यास इति द्वादशव्रतक्रमोपन्यासः । अधुना गाथार्थ उच्यते " पढमे अणुव्वयम्मि " त्ति इह व्रतं नियमः प्रत्याख्यानमिति पर्यायास्तत् पुनर्महदणुभेदाद् द्विभेदम्, अतोऽणुव्रते तानि च स्थूरपदविशेषितप्राणातिपात-मृषावादा-ऽदत्तादान-मैथुन-परिग्रहविरमणाख्यानि पञ्च तेषु मध्ये 'प्रथमेऽणुव्रते' प्राणातिपाताख्ये ते च प्राणिनो द्विविधाः सूक्ष्माः स्थूलाश्च । तत्र सूक्ष्माः सूक्ष्मशरीरत्वेन श्लक्ष्णाः न तु सूक्ष्मनामकर्मोदयतः तेषां सर्वलोकव्यापकानामन्यतो विनाशायोगात्, परमिह स्थूरत्रसापेक्षया एकेन्द्रियाऽव्यवहारिणः सूक्ष्मा प्राणाः ते च पृथिव्य-ऽप्-तेजो-वायु-वनस्पत्याख्या पञ्चधाः । स्थूलाश्च द्वि-त्रि-चतु-पञ्चेन्द्रियभेदाच्चतुर्धा । तत्र प्राणा दश, ते च एक-द्वि-त्रि-चतुष्पञ्चेन्द्रियाऽसंज्ञि-संज्ञिभेदजीवानां क्रमशः चतुः-षट्-सप्ता-ऽष्ट-नव-दशभेदाः प्राणा ज्ञेयाः, तदुक्तम्—

"इंदिय-बल-ऊसासा-ऽऽउ पाण चउ-छक्क-सत्त अट्ठविहा । इगि-विगल-ऽसन्न सन्नी, नव दस पाणा उ बोधव्वा ॥" तथा—

"पञ्चेन्द्रियाणि त्रिविधं बलं च, उच्छ्वासनिःश्वासमथान्यदायुः ।
प्राणा दशैते भगवद्भिरुक्तास्तेषां वियोजीकरणं हि हिंसा ॥ ४८ ॥"

तत्र गृहिणः सूक्ष्माणामेकेन्द्रियजीवानां नित्योपयोगित्वेन नियमाभावात् न तेषां विरतिरस्ति अतो न तद्विषयं

प्रतिक्रमणं किन्तु स्थूलजीववधविषयम् अतः प्रोच्यते 'स्थूलकप्राणातिपातविरतितः' स्थूला एव स्थूलकाः—कुदृष्टिभिरप्युपलम्भत्वाद् द्वीन्द्रियादयस्तेषां स्थूलकानां प्राणाः—शरीरेन्द्रियोच्छ्वासाऽऽयुर्लक्षणास्तेषामतिपातः—वधो हिंसनं, स च वधः प्राणिनां सङ्कल्पाऽऽरम्भाभ्यां द्विधा सम्भवति । तत्र व्यापादनाभिसन्धिः सङ्कल्पः, स च सङ्कल्पजो वधः गमनागमनादिव्यापारजीवपरिज्ञानां द्वि-त्रि-चतु-पञ्चेन्द्रियाणामस्थ्यादिनिमित्तं सङ्कल्प्य यः क्रियते, कृष्यादिकस्तु आरम्भजः तेषामेकेन्द्रियपर्यन्तप्राणानां स्थूलजीवानामतिपातो विनाशो हननं प्राणातिपातः । अत्रोक्तार्थसङ्ग्राहिकाः पूर्वसूरिकृतगाथाः स्युः यथा—

दुविहो पाणाइवाओ, सुहुमो थूलो य तत्थ पुण सुहुमो । एगिंदियजीव[1]विसउ, थूलो बेइंदियाइगओ ॥ ४९ ॥

सङ्कप्पारंभेहिं, दुविहो थूलो उ तत्थ संकप्पो । होइ हु उवेयकरणं, आरंभो पयणु किसिमाई ॥ ५० ॥

संकप्पो वि य दुविहो, अवराहकरम्मि निरवराहे य । पाणाइ अवहरतो, सवराहो अवरो इयरो ॥ ५१ ॥

तस्य स्थूलप्राणातिपातविरतितः विरतेस्तामाश्रित्य यद्वा "विरईए" त्ति सप्तम्यन्तपाठात् स्थूलप्राणातिपातविरतौ किम् ? इति अत आह "आयरिय" त्ति यद् 'आचरितम्' अनुष्ठितम् 'अप्रशस्ते' अशोभने भावे सति, तृतीयार्थे वा सप्तमी, अप्रशस्तेन भावेन क्षायोपशमिकाद्भावादौदयिकभावगतेन यत् कृतमित्यर्थः, "इत्थ" त्ति प्राणातिपाते प्रमादप्रसङ्गेन यदाचरितम् , तत्र प्रमादो मद्यादिभेदतः पञ्चधा तस्य प्रसङ्गः—तथासेवनारूपप्रयोगो व्यापारः तेन वृत्तारम्भजे वधे

१ °विसओ, मू° च १ ॥

श्रावकस्य नियमेऽप्रवृत्तिः किन्तु सङ्कल्पज एव हल-शकट-खेटनादिके आरम्भजे वधे नैव[1] त्रसादिषु हननसङ्कल्पः किन्तु पृथिव्यादिप्रसङ्गतः तदुपमर्दः । तेनैवारम्भजात् सङ्कल्पो गुरुकः । तेनैव चैत्याद्युपदेशेन पृथिव्याद्युप[2]मर्देऽपि भव्य-सत्त्वोपकार एव [3]चित्तप्रबन्धादधिकारिणः तदपरिसमाप्तौ कारयितुर्मरणेऽपि कूपोदाहरणतः शुद्धिरदुष्टा, अनधिकारिणो भगवदाज्ञाविराधनाद् नासौ शुद्धिः, अधिकारी च गृहस्थः सम्यग्दृष्टिर्मुख्यतः तस्य सारेतरविभागकल्पनासम्भवात्, वाप्यादिषु जीवोपमर्दतुल्येऽपि सत्त्वोपष्टम्भो न तुल्यः चैत्यविम्बाद्युद्देशस्य, चैत्यजिनविम्बानि हि न पापक्रियासु प्रवर्तकानि, तडागादिषु सत्त्वोपष्टम्भोऽपि न फलवान्, नहि श्वपाक–सिंहादयस्तत्र न पिबन्ति, मत्स्य–पूतरकादिप्र-भूतत्रससंहारश्च महान्, न च जिनविम्बादिकं सत्त्वोपद्रवकारि अतस्तदन्यस्थूलप्राणातिपातव्रतातिचारेषु विशेषतः प्रतिक्रमणम् । आरम्भजेऽपि यत् परिशुद्धजलग्रहणाद्यनुष्ठेयम(म)तिचरितं तत्रापि च उक्तश्चारम्भजेऽयं विधिः ।

परिसुद्धजलग्गहणं, दारुय-धन्नाइयाण तह चेव । गहियाणवि परिभोगो, विहीए तसरक्खणट्ठाए ॥ ५२ ॥

'परिशुद्धजलग्रहणं' वस्त्रपूतत्रसरहितजलग्रहणं दारुधान्यादीनां च त्रसरहितपरिशुद्धानां ग्रहणम् । अनीलाजीर्णानां दारूणां अकीटविद्धस्य धान्यस्य त्रसासंसक्तफलादेश्च ग्रहणं गृहीतानामपि परिभोगो विधिना कर्तव्यः परिमितप्रत्यु-पेक्षितादिना । किमर्थं ? द्वीन्द्रियादित्रससंरक्षार्थम् तथा गमनादिकमपि, त्रसरहितादि, यथाशक्ति रक्षता कार्यमिति सूत्रगाथार्थः ॥ ९ ॥ अधुना यदाचरितं तत्प्रतिक्रमणमाह—

१ नैवं त्रसादिषु सं२ ॥ २ °पमर्दोऽपि सं.२ ॥ ३ चित्तप्रतिबन्धा° सं.२ ॥

वह बंध छविच्छेए, अइभारे भत्तपाणवोच्छेए । पढमवयस्सऽइयारे, पडिक्कमे देसिय सव्वं ॥ १० ॥

व्या०—वधो बन्धश्छविच्छेदोऽतिभारो भक्तपानव्यवच्छेदः, इति पञ्चातिचारानाऽऽश्रित्य प्रथमव्रते यदतिचरितं किञ्चित् तस्मात् प्रतिक्रामामि दैवसिकं सर्वमिति समुदायार्थः । अवयवार्थस्तूच्यते तत्र हननं 'वधः' 'वध ताडने' वधो वा यष्टि-कशादिभिस्ताडनं, बन्धनं 'बन्धो' मनुष्य गवादीनां रज्जु-दामकादिभिः संयमनम्, एतौ च द्विधा सम्भवतः—अर्थाय-ऽनर्थाय च । तत्रानर्थाय वधो बन्धश्च विवेकिना तावन्न कदाचित् समाचरणीयः, अर्थाय सोऽपि द्विविधः—सापेक्षो निरपेक्षश्च । यो मरणाद्यनपेक्षं निर्दयं ताड्यते स निरपेक्षः । भीतपर्षत्कोऽपि च यदि तस्य कश्चिन्न बिभेति अतोऽसद्व्रते किञ्चिदाचरति तदा मर्माणि मुक्त्वा सदयस्य तं लतया दवरकेण वा सकृद्द्वित्री ताडयतोऽपि सापेक्षो वधः । बन्धोऽपि यदा चतुष्पद-चौरादिकं प्रदीपनकमरणाद्यपेक्षां मुक्त्वा निर्दयं निश्चलमत्यर्थमात्मना बध्यते तदा निरपेक्षः । यदा तु चतुष्पदानि तावत् तथा बध्नाति यथा प्रदीपनकादिषु तद्बन्धनस्य मोचनच्छेदनादिकं कर्तुं शक्यते । द्विपदेषु च दासं दासीं चौरं वा, पाठादिप्रमत्तं पुत्रादिकं वा तन्मरणादिभीरुतया सदयं तथा बध्नाति यथा पञ्चानामपि तेषामङ्गानि सप्रवीचाराणि भवन्ति, प्रदीपनकादिषु च विनाशो न सम्पद्यते तदाऽसौ सापेक्षः । इह चायं मुनीन्द्रोपदेशो यत् श्रावकेण त एव गवादयः परिग्रहीतव्या येऽबद्धा अप्येवमेवासते, भीतपर्षदा च तथा तेन भाव्यं यथा बन्धादि-मन्तरेणापि दृष्टिदर्शनादिमात्रत एव भीतो दासादिः सम्यक् प्रवर्तते, अथ कोऽपि न तथा प्रवर्तते तदा यथोक्तस्वरूपं सापेक्षं बन्धमपि कुर्वन् न व्रतमतिचरति, निरपेक्षे त्वस्मिन् विधीयमाने व्रतातिचार इति । छविः—त्वक् तद्योगात्

शरीरमपि च्छविस्तस्य च्छेदो- असिपुत्रकादिभिः कर्णादिकर्तनं छविच्छेदः, अत्रापि भावना निगदितानुसारत एव कार्या, नवरं कर-चरण-कर्ण-नासिका-गल-पुच्छाद्यवयवान् निर्दयं छिन्दानस्यासौ निरपेक्षः । अरुः गण्डं मांसाङ्कुरादिकं वा [1]रागाद्यदूषितमतेः सदयं छिन्दतः सापेक्षः । भरणं भारः अतीव भारः अतिभारः । समभूभागेषु सुखेन गच्छतामपि उट्टङ्कादिषु कृच्छ्रेण निर्वहतामतिभारः तस्यातिभारस्य प्रभूतस्य धान्य-पूगफलादेर्गन्त्रि-गोपृष्ठयादावारोपणं अतिभारारोपणम् । इह चैवं पूर्वमुनिनिगदिता यतना । या द्विपद-चतुष्पद-वाहनेन जीविका सा श्रावकेण दूरत एव परित्याज्या । अथ कथमप्यन्यथाऽसौ न भवेत् तदा द्विपदस्तावद् यावन्तं भारं स्वयमुत्क्षिपति अवतारयति च तावन्तमेव वाह्यते, चतुष्पदस्तु यावन्तं भारं वोढुं क्षमते ततोऽसौ कियताऽप्यूनः क्रियते हल-शकटादिषु पुनरुचितवेलायामसौ मुच्यते । भक्तम्-ओदनादि पानं-पेयमुदकादि तयोर्भक्त-पानयोर्व्यवच्छेदः, अत्यन्तपीडितानां तदर्थिनामप्यभिनिवेशाद् निरोधो-निवारणमदानं भक्त-पानव्यवच्छेदः । अर्थाऽनर्थादिचिन्ताऽत्राऽपि तथैव कार्या, नवरं सापेक्षो रोगचिकित्सार्थमसौ सम्भवति, अपराधकारिणि च वाचैव ब्रूयाद्यथा 'न दास्ये तव भोजनादि' शान्तिनिमित्तं चोपवासं कारयेत् किं बहुना यथा मूलगुणस्य प्राणातिपातविरमणस्य मालिन्यं न भवति तथा यतितव्यमिति । अत्राह कश्चित् 'ननु [2]प्राणानामतिपात एवानेन प्रत्याख्यातः न बन्धा(वधा)दयः, तत्करणेऽपि कोऽस्य दोषः यथा गृहीताविरतेरखण्डितत्वात्, अथ बन्धा(वधा)दयोऽपि प्रत्याख्यातास्तेन तर्हि तत्करणे व्रतभङ्ग एव विरतेः खण्डितत्वात् कुतोऽतीचारत्वम्,

१ रागादिदूषित° सं१ ॥ २ प्राणिनामति° सं१ ॥

किं च बन्धा(वधा)दीनामपि प्रत्याख्येयत्वेऽङ्गीक्रियमाणे प्रस्तुतव्रतेयत्ता विशीर्येत वधादीनामपि पृथग् व्रतत्वादिति। अत्रोच्यते मुख्यतया प्राणातिपात एव तेन प्रत्याख्यातो न बन्धा(वधा)दयः केवलं तत्प्रत्याख्याने अतस्तेऽपि प्रत्याख्याता एव द्रष्टव्याः प्राणातिपातनिबन्धनभूतत्वात् तेषाम्। यदि तेऽपि प्रत्याख्यातास्तर्हि भवतु तत्करणे व्रतभङ्गः, नातिचार इति चेद्, नैवं। द्विविधं हि व्रतं, अन्तर्वृत्त्या बहिर्वृत्त्या च। तत्र मारयामीति विकल्पशून्योऽपि यदा कोपाद्यावेशात् परप्राणप्रहाणनिरपेक्षो बन्धा(वधा)दौ प्रवर्तते स्वायुर्बलीयस्त्वादिकारणात् तस्य बन्धा(वधा)दिविषयीकृतस्य जन्तोर्मृत्युर्न सम्पन्नं तदा दयापरिणतिवर्जिततया विरत्यनपेक्षप्रवृत्त्या (च) भग्नमन्तर्वृत्त्या व्रतं, प्राणिघाताभावात् तु बहिर्वृत्त्या पालितम्। ततो देशस्य भञ्जनाद् देशस्य तु पालनादतिचारव्यपदेशः प्रवर्तते तदुक्तम्—

न मारयामीतिकृतव्रतस्य, विनैव मृत्युं क इहातिचारः॥ इत्याशङ्क्योत्तरमाह—
निगद्यते यः कुपितो वधादीन्, करोत्यसौ स्यान्नियमे उपेक्षः॥ ५२॥
मृत्योरभावान्नियमोऽस्ति तस्य, कोपाद्दयाहीनतया तु भग्नः॥
देशस्य भङ्गादनुपालनाच्च, पूज्या अतीचारमुदाहरन्ति॥ ५३॥

यच्चोक्तम् व्रतेयत्ता विशीर्येत इत्यादि, तदप्ययुक्तं। विशुद्धहिंसादिविरतिसद्भावे हि वधादीनामभाव एवेति। तस्माद् वधादयोऽतिचारा एव न पृथग् व्रतानि। [1]वधादिग्रहणस्य च उपलक्षणत्वाद् अपरेऽपि हिंस्रमन्त्र-तन्त्रादयोऽ-

१ बन्धादि° ख २ ॥



तिचारतयाऽत्र द्रष्टव्याः । तथा मृषावादादिद्वारेणापि प्राणातिपातव्रतातिचारसम्भवो दृष्टो यथा—ते भ्राता मृत इत्युक्ते द्रव्यापहाराद् वा कश्चिन्म्रियते इत्यादाविति । प्रथमव्रतस्य प्राणातिपातविरतिरूपस्यैते वध-बन्धादयोऽतिचारा व्रतातिक्रमणहेतवो व्रतमालिन्यविधायिन इति यावत् । एतान् प्रतिक्रामामि एतेषु "मिच्छामि दुक्कडं" ति भणामि । प्रथमव्रतातिचारविषये वाऽऽत्मानं निवारयामि तेभ्यो निवर्तेहम् । अथ "पढमे अणुव्वयम्मि" इत्यभिधानानन्तरं "वह-बन्ध" इत्याद्यभिधाने "पढमवयस्स" इत्यतिरिच्यते, तदसत्, तेषामपि कथञ्चिदनतिचारत्वख्यापनार्थत्वादस्य । तथाहि—तृणादिपोषितं वत्सं स्वमातरं धयन्तं निवारयतोऽपि नातिचारः, तथा गां चरन्तीमनाहत्य स्वसस्यादेर्निवारयतोऽपि, तथा स्वसूनुं धयन्तमजीर्णदोषेणास्वस्थमवगम्य निवारयतो भोजनादिकमधमर्णं वा रुन्धतो रोधयतो वा ग्लानिमनापादयतो नातिचारो, येन हि क्रियमाणेन मरणसम्भवः स्याद् अतिचारोऽसौ, व्रते निरपेक्षप्रवृत्तेः । अथ प्राणातिपातव्रते पञ्चैवातिचाराः ते च स्वनामग्राहमुक्ताः किं सर्वग्रहणेन इति चेद् न । अयमभिप्रायः, तावदेतान् न करोम्येव त्रुटियोगात्, कृत्वा (ताः) सद्यस्तदर्हं प्रायश्चित्तं प्रतिपद्ये । यदि पुनः कृतं च बहुव्यग्रतया विस्मृतं च तन्नामग्राहमनालोच्य तपः प्रतिपत्तिः कर्तुमशक्या, नाप्यनुच्चारिते गुरवस्तद्दातुमलं, अतः सर्वमित्याह 'दैशिकं' देशोद्भवमतिचारं प्रतिक्रामामीति गाथार्थः ॥ १० ॥ इत्युक्तं प्रथमव्रतातिचारप्रतिक्रमणम् । साम्प्रतं द्वितीयव्रतातिचारस्योच्यते—

बीए अणुवयम्मी, परिथूलगअलियवयणविरईओ । आयरियमप्पसत्थे, एत्थ पमायप्पसंगेणं ॥ ११ ॥

व्या०—'द्वितीये अणुव्रते' परिस्थूलकालीकवचनविरतौ । इह मृषावादो द्विविधः—स्थूलः सूक्ष्मश्च । परिस्थूर-

द्विपदादिवस्तुविषयोऽतिदुष्टविवक्षासमुद्भवः स्थूलः । एतद्विपरीतः सूक्ष्मः हास्यक्रीडादिकोऽदुष्टविवक्षासमुद्भवः, स च महाव्रतविषयः, तेनेह न प्रयोजनं श्रावकधर्माधिकारात् । अत्र गाथा—

" दुविहो य मुसावाओ, सुहुमो थूलो य तत्थ इह सुहुमो । परिहासाइप्पभवो, थूलो पुण तिव्वसंकेसा ॥५४॥ "

तत्र स्थूलमृषावादो अद्भुतोद्भावनादिकः यथा–जगद्व्याप्यात्मा श्यामाकतन्दुलमात्रो वा, नास्ति वात्मपरलोकादि, क्षेत्राणि कृषत, दम्यन्तां गोरथका इत्यादि सावद्यभाषणरूपः । कन्यादीनां निर्दोषत्वेऽपि शीघ्ररागादिदोषतः सदोषत्वाध्यारोपः । इय शाकिन्यन्ध-कुब्ज-काण-चोर-जार-दोषभाषण-निधानलाभाऽपलपनादिकः, अपि च किं बहुना येन भाषितेनात्मनः परस्य चोपघातः संक्लेशश्च भवति तद् परिस्थूरवस्तुविषयमतिदुष्टविवक्षासमुद्भवं गार्हस्थ्य-परोपतापहेतुकं वचनमपि परिस्थूरं तदेव परिस्थूरकं तच्च तदलीकवचनं च परिस्थूरकालिकवचनम्, तच्च कन्या गो-भूम्यलीक-न्यासापहार-कूटसाक्षित्वभेदात् पञ्चविधम् । तत्र कन्याविषयमनृतं अभिन्नकन्यकामेव भिन्नकन्यकां वदतो विपर्ययं वा । इद चोपलक्षणमात्रं सर्वस्यापि द्विपदविषयस्यालीकस्य, ततोऽकुमारं कुमारं ब्रुवतः, अब्रह्मचारिणमपि ब्रह्मचारीति । गवालीकमप्यल्पक्षीरामेव गां बहुक्षीरां वक्ति विपर्ययं वा । इदं चतुष्पदविषयस्याप्यलीकस्योपलक्षणं गामश्व वदतः । भूम्यलीकं परसत्कामेवात्मादिसत्कां ब्रुवं वदतः व्यवहारे वा नियुक्तो अनाभवद्व्यवहारेणैव कस्यचिद्रागाद्यभिभूतो वक्ति अस्येयमाभवतीति । इद च सर्वस्यापि पृथिव्याद्यपदद्रव्यविषयालीकस्योपलक्षणम्, तथा चोक्तम्—

" कन्नागहणं दुपयाण सूयगं चउपयाण गोवयणं । अपयाणं दव्वाणं, सव्वाणं भूमिवयणं तु ॥ ॥ ५५ ॥ " सि

यद्येवं कन्यादिविशेषोपादानमुत्सृज्य सामान्येन द्विपद-चतुष्पदा-ऽपदग्रहणमेव कस्मान्न कृतम्? एतावतैव तदतिरिक्तवस्त्वभावेन सर्वसङ्ग्रहसिद्धेः। सत्यं, किन्तु कन्याद्यलीकानां लोकेऽतिगर्हितत्वाद् विशेषेण तद्वर्जनार्थं तदुपादानम्, अत एव लोकेऽतिगर्हिततया रूढत्वाद् न्यासापहार-कूटसाक्षिकत्वेऽपि कन्याद्यलीकत्वादिभ्यः पृथगुपात्ते। तत्र नयस्यते निक्षिप्यत इति न्यासः-रूपकाद्यर्पणं स्थापनिकेत्यर्थः तस्यापहरणं न्यासापहारः। अदत्तादानरूपत्वाद् अस्य कथं मृषावादत्वं? येनेहोपात्तः, उच्यते, अपलापवचनस्य मृषावादविषयत्वात्, तद्ग्रहणं त्वदत्तादानमेव, 'कूटसाक्षित्वं' अलीकसाक्षिदानम्, उत्कोच-मत्सराद्यभिभूतः प्रमाणीकृतः सन्निदं वक्ति एतस्य विवादेऽहं साक्षी। तदत्र कन्यादिगोचरपञ्चविधपरिस्थूरकालीकवचनस्य विरतिः-नियमस्तस्यां परिस्थूरकालीकवचनविरतौ यदाचरितमिति, नवरमलीकवचनविरतौ इत्युक्ते सर्वालीकविरतिगोचरत्वं स्यात्, अतः स्थूरग्रहणं कन्याद्यलीकस्यैव व्रतविषयत्वात्, तदपि च कन्याद्यलीकं जघन्य-मध्यमोत्कृष्टतस्त्रिविधं स्यात्, तत्र स्थूरग्रहणेन प्रचलायसे त्वमित्युक्ते न प्रचलामीत्यादेर्व्युदासः, परिशब्देन तु न सुन्दरेयमित्यस्य जघन्यकन्याद्यलीकस्य, दुष्टनक्षत्रेयमिति मध्यमस्य च व्युदासः, परिस्थूरमिति समुदितेनातिशयस्थूरं पतिमारिकेयं तल्लक्षणयोगात् शाकिनी वा विषकन्या वा सुवृद्धत्वादशीला वा अनिश्चितपितृका वेति उत्कृष्टस्य च स्वीकारः, परिस्थूरालीकविरतावित्युक्ते त्रिभिरपि योगैर्नियमः स्यात् न चायं नियमो युज्यते गृहिणः कस्यचित् कथञ्चिद्विरतिसद्भावादिति वचनग्रहणम्, वचनं भणनमभिधानमित्येकोऽर्थः। भेदोपलक्षणार्थं चैतत्, कश्चित् स्थूरं मनसा न चिन्तयति कश्चिद्वाचा न वक्ति कश्चित् कायेन भ्रू-कर-पाद-शिरः सञ्ज्ञया

नाऽऽचरति कूटलेखाकारेण वेति अस्या विरतौ 'यद् 'आचरितम्' आसेवितम् "एत्थ" त्ति द्वितीये मृषावादाख्येऽणुव्रते 'अप्रशस्ते' अशोभने भावे सत्यसायपि कुतः? 'प्रमादप्रसङ्गेन' मद्यादिपञ्चविधप्रमादव्यापारेण तस्यातिचारस्य 'पडिक्कमे देसिय सव्वमि' त्युत्तरगाथास्थपदसम्बन्धोऽत्र लगयितव्यः, ततो दैवसिकमतिचारं सर्वं प्रतिक्रामामि तस्मान्निवर्तेऽहं मिथ्यादुष्कृतकरणेनेति गाथार्थः ॥ ११ ॥ यदाचरितमेतद्वीयातिचारजातं तदाह—

सहसा रहस्सदा(स्सदा)रे, मोसुवएसे य कूडलेहे य। बीयवयस्सइयारे, पडिक्कमे देसियं सव्वं ॥ १२ ॥

व्या०—सूचनात् सूत्रम् इति कृत्वा "सहस" त्ति सहसा अभ्याख्यानं "रहस" त्ति रहोऽभ्याख्यानम् रहस्याभ्याख्यानं वा "दारे" त्ति स्वदारमन्त्रभेदः तथा मृषोपदेशः कूटलेखकरणं चेति द्वितीयव्रतस्य पञ्चातिचारा एते। तत्र सहसाऽनालोच्य अनिश्चित्याभ्याख्यानमसदोषाध्यारोपणं यथा चौरस्त्वं पारदारिको वेति तत् सहसाभ्याख्यानं "रहस" त्ति रहस् अव्ययं यद्वा रहति त्यजति जनसङ्गमिति रहः। रहस् सान्त (सान्त) क्लीबे। रहसा एकान्तेन हेतुभूतेनाभ्याख्यानं रहोऽभ्याख्यानम्। यदि वा रहसि सम्भवं रहस्यं तेन तस्मिन् वाऽभ्याख्यानं रहस्याभ्याख्यानम्, एतदुक्तं भवति, रहसि मन्त्रयमाणानभिवीक्ष्य वदति यथैष मन्त्रो मया ज्ञातः, इदं चेदं च राजविरुद्धादिकमिह मन्त्र्यत इति। अत्राह, नन्वाभ्याख्यानमसद्दोषाभिधानरूपत्वाद् मृषावाद एव अतस्तदभिधाने व्रतभङ्ग एव कुतोऽतिचारता। सत्यम्, किन्तु यदा परोपघातकमनाभोगादिनाऽभिधत्ते तदा सङ्क्लेशाभावेन व्रतनिरपेक्षत्वाभावाद् न तद्भङ्गः, परो-

१ मत्तदायरि° स २ ॥

पघातहेतुरूपत्वात् तु भङ्गः, इति भङ्गाभङ्गरूपतयाऽतिचारतेति, यदा तु तीव्रसङ्क्लेशयुक्तोऽभ्याख्याति तदा व्रतनिरपेक्षत्वाद् भङ्ग एव । आह च—

सहसऽब्भक्खाणाई, जाणंतो जइ करेज्ज तो भंगो । जइ पुणनाभोगाईहिंतो होइ अईयारो ॥ ५६ ॥

यदि वा उद्गाढविप्रतिपन्नसामन्तान् मन्त्रयमाणान् दृष्ट्वा राजाह मां ग्रहीतुमभिमन्त्रयन्ते इति सम्भवाद् भङ्गः, अनिश्चयादतिचारः । स्वदाराणां मन्त्रः—विश्रम्भभाषितं तस्य भेदः—अन्यकथनं, दारग्रहणं चेह मित्राद्युपलक्षणम् । अयं चानुवादरूपत्वेन सत्यत्वाद् यद्यप्यतिचारो न घटते, तथापि मन्त्रितार्थप्रकाशनजनितलज्जादिभावतः स्वदारादेर्मरणादिसम्भवेन परमार्थतस्तस्यासत्यता ।

'सच्चं पि तं न सच्चं, जं परपीडाकरं वयणं ॥' इत्यादिवचनात् अतः कथञ्चिद्भङ्गात् कथञ्चिचाभङ्गादतिचारतेति । अन्यदीयव्याख्या त्वत्र यथा—काचिद्धिपत्युः सौभाग्यमावेदयति यथा मां प्रार्थयते अमुको न पुनरहं प्राणात्ययेऽपीच्छामि । स तु स्त्रियः प्रायोऽभिलपणीया अपि तथाऽनृताभिधानशीला अपीति जातसन्देहस्तामुपालभतेऽतोऽतिचारः । दारग्रहणं धवोपलक्षणं यदा तु पुरुषः प्रहासेनाह नाहमद्य निधुवनार्थी परिखेदितत्वात् त्वत्सपत्न्याः, सानु[स]रोषं तामाह हताशे! शोभनव्रता त्वमसि याऽपरपाद्यामेवमाचरसि तामुपालम्भमानायास्तस्या अतिचारः । "मोसुवएसे य" त्ति मृषा—अलीकं तस्योपदेशो मृषोपदेशः । इदमेवं चैवं च ब्रूहि त्वमेवमेवं चाभिदध्याः कुलगृहेष्वित्यादिकमसत्याभिधानशिक्षाप्रदानमित्यर्थः । इह व्रतसंरक्षणेऽनिर्गतापेक्षत्वाद् अनाभोगादिना परवृत्तान्तकथनद्वारेण मृषोपदेशं

पच्छतोऽतिचारता, चकाराद् निकृतिप्रधानवाक्याध्यापनमप्यतिचारः । कूटलेखस्यासद्भूतार्थसूचकाक्षरलेखनस्य करणं 'कूटलेखकरणं' वितथार्थाभिधायकलेखलेखनम् । अत्रेयं कुर्वतो योगत्रयमपि दुष्टं व्याप्रियते । तथाहि—कूटलेखं लिखतो मनःपूर्वकत्वात् कायस्य मन.कायालीकम् तमेव च वाचा वदत एव त्रिरूपो लेखः एतद्धनं मम पित्रा त्वदीयपित्रे दत्तमासीत् साक्षिणस्तु मृताः सम्प्रतीति । बहुपापोऽयं कूटलेखः । परमिहापि मृषाभणनमेव मया प्रत्याख्यातम्, इदं त्वन्यनाममुद्राक्षरबिम्बस्वरूपलेखनमिति भावनया मुग्धेषु वर्तत(?) सापेक्षस्यातिचारता भावनीया अन्यथा वाऽनाभोगादिकारणेऽप्योऽसौ वाच्येति । "बीए अणुव्वयम्मी" इत्यभिधानानन्तरं सहसा इत्यत्र भूयोऽपि द्वितीयव्रतस्येति यद् आह तद् दर्शयति यदैते सहसाभ्याख्यानादयो द्वितीयव्रतातिचारा उड्डाहप्रच्छादन-प्रवचनमालिन्यपरिहाराय क्षेत्रसाधुविषये क्रियन्ते तदा नातिचारा नापि प्रतिक्रमणार्हाः तदर्थमलीकमपि वदतो न राग-द्वेषौ मतामायहेतू केवल गुण एव । यदुक्तम्—

साहूण चेइयाण य, पडिणीयं तह अवण्णवायं च । जिणपवयणस्स अहियं, सव्वत्थामेण वारेइ ॥५१॥

अस्मिन् पञ्चविधेऽपि द्वितीयव्रतस्यातिचारे प्रमादप्रसङ्गेन यदतिक्रान्तं तस्मादतिक्रामामि दैवसिकमिति उपलक्षणत्वात् रात्रिकादीनां सूचना द्रष्टव्या । सर्वम् अतिक्रम-व्यतिक्रमा-ऽतिचाराऽनाचारभेदम्, अथवा 'सर्वम्' इति सूक्ष्ममपि बुद्धिपूर्वक उभयलोकपरिशुद्ध भाषणीयम् । उक्तं च—

१ असद्भूता° सं१ ॥

सुद्धिए निएऊणं, भासेज्जा उभयलोगपरिसुद्धं । सपरोभयाण जं खलु, न सव्वहा पीडजणगं तु ॥ ५७ ॥
तच्च तथा यत्नभाषितं तस्येति गाथार्थः ॥१२॥ साम्प्रतं तृतीयव्रतातिचारप्रतिक्रमणमुच्यते—

तइए अणुवयम्मी, थूलगपरदव्वहरणविरईओ । आयरियमप्पसत्थे, एत्थ पमायप्पसंगेणं ॥ १३ ॥

व्या०—चौरस्य कर्म चौर्यं, स्तेनस्य कर्म स्तेयं, आदीयते यत् तद् आदानं 'अदत्तस्य' स्वामिनाननुज्ञातस्य 'आदानम्' ग्रहणं अदत्तादानम् एते त्रयोऽप्येकार्थाः । तत्र तृतीये अणुव्रते "थूलगपरदव्वहरणविरईओ" त्ति स्थूरकं च तल्लोक-राजविरुद्धापेक्षया परद्रव्यहरणं चेति समासः, अस्मिन् कृते लोकनिन्दाचौरङ्कारशब्दप्रवृत्तिः क्षत्रखातादिना हरतो बहुतरशुल्कभङ्गे राजग्राह्यत्वाद् हस्तपदादिच्छेदः तद्द्रव्यहानिश्चोपजायते तत् स्थूरकमभिधीयते । तच्च सचित्ताचित्ताभेदतो द्विधा । मिश्रस्यानयोरेवान्तर्भावात् । पुनरेकैकं द्विधा [1]स्थूरं सूक्ष्मं च । तत्र [2]स्थूरं सचित्तं द्विपदचतुष्पद-धान्यादि, सूक्ष्मं तज्जलाऽनलादि । अचित्तं बादरं हिरण्य-कांस्य-दूष्यादि, सूक्ष्मं कर्णशोधनशिलिका-तृण-लेखन्यादि, अतः स्थूरकं बादरं राजविरोधादिकारणं सचित्ताचित्तादिभेदं क्षत्रगृहादौ सुस्थगितादिस्थितं यत् परद्रव्यं तस्य क्रोधादिना हरणं तस्माद् विरतिः, तस्या यदतिचरितमप्रशस्तेऽत्र स्तेनाहृतग्रहणादौ विरतिभङ्गकारणे प्रमादप्रसङ्गेनेति गाथार्थः ॥१३॥ यदाचरितं तदाह—

१ स्थूलं सं.२ ॥ २ स्थूलं सं.२ ॥

तेनाहडप्पओगे, तप्पडिरूवे विरुद्धगमणे य । कूडतुल कूडमाणे, ¹तइयम्मि अणुव्वए निंदे ॥ १४ ॥

व्या०—स्तेनाहृतं, तस्करप्रयोगः, तत्प्रतिरूपव्यवहारः, विरुद्धराज्यगमनं, कूटतुलाकूटमानकरणमिति । तत्र स्तेनाः—चौरास्तै· आहृतम्—आनीतं किञ्चित् कुङ्कुमादि देशान्तरात् तत्समर्घमिति लोभाद् यद्गृहीतम् । इदं हि लोभदोषात् काणक्रयेण गृह्णंश्चौरो व्यपदिश्यते । यदाह—

चौरश्चौरापको² मन्त्री, भेदज्ञः काणकक्रयी । अन्नद³ स्थानदश्चैव, चौरः सप्तविधः स्मृतः ॥५८॥

तदित्थं चौर्यकरणाद् व्रतभङ्गः, वाणिज्यमेव मया विधीयते न तु चौर्यम् इत्यध्यवसायतो व्रतनिरपेक्षत्वाभावाद् भङ्गः इत्युभयरूपत्वादतिचारता । तदेव कुर्वन्तीह तस्कराः—चौरा एव उच्यन्ते तेषां प्रयोजनं—प्रयोगः तस्यापि हरणक्रियायां वा प्रेरणमभ्यनुज्ञा 'हरत यूयं प्रहीष्यामः, किमिदानीं निर्व्यापारास्तिष्ठथ यदि सम्बलादिकं नास्ति भवतां 'तदाऽहं तत् प्रयच्छामि युष्मदानीतमोषस्य वा यदि विक्रायको न कश्चिदस्ति तदाऽहं विक्रेष्यामि गच्छन्तु चौर्यार्थं भवन्तः' इत्यादिवचनैश्चौराणां स्तेयक्रियायां व्यापारणं तस्करप्रयोगः । अत्रापि भङ्गाभङ्गसापेक्षतायामनाभोगादिना वाऽतिचारता भावनीया । तेन प्रस्तुतेन कुङ्कुमादिना प्रतिरूपं सदृशं कुसुम्भादि प्रक्षिप्यते यत्र व्यवहारे स तत्प्रतिरूपो व्यवहारः । अथवा तत्प्रतिरूपेण सहजकर्पूरादिसदृशेन कृत्रिमकर्पूरादिना यो व्यवहारो यद् यत्र घटते [घृतादि

१ अत्र "पडिक्कमे देसियं सव्वं" इति पदं समुचितं बहुभिरादृतत्वात्, परं मया तु टीकाकृन्निर्दिष्टरूपतया विवेचितं तदेव न्यस्तम् ॥ २ चौरोपको ख १ ॥ ३ तथा तदहं प्रय° सं २ ॥

घृतादिषु पलञ्जीवसादि] तस्य तत्र प्रक्षेपेण यो विक्रयः परद्रव्यापहरणं स तत्प्रतिरूपव्यवहारः । "विरुद्धगमणे य" त्ति सूचनात् विरुद्धराज्यातिक्रमे च यस्य राज्ञः सम्बन्धेनास्यते तद्विरुद्धे राज्ञि गमनं वाणिज्येन विरुद्धगमनम् यद्वा विरुद्धो–निजदेशस्वामिनः प्रतिपन्थी तस्य राज्यं–कटकं देशो वा विरुद्धराज्यं तत्र निजस्वामिनो निषेधवचनमतिलङ्घ्य लोभात् क्रमणं–गमनं विरुद्धराज्यातिक्रमः । अयं च यद्यपि स्वस्वामिनाऽननुज्ञातस्य परकटकादिप्रवेशस्य—

सामीजीवादत्तं, तित्थयरेहिं तहेव य गुरुहिं । एयस्स उ जा विरई, अदिन्नदाणस्स सा विरई ॥ ६९ ॥

इत्यदत्तादानलक्षणयोगात् विरुद्धराज्यातिक्रमकारिणां चौर्यदण्डयोग्यतावासेश्चादत्तादानरूपत्वाद् भङ्ग एव तथापि वाणिज्यमेवेदं मया कृतं न चौर्यमिति भावनया व्रतनिरपेक्षत्वाभावाद् लोके चौरोऽयमिति व्यपदेशाभावाचातीचारता । "कूडतुल कूडमाणे" त्ति तुला–वणिगुपकरणविशेषः मानं–कुडवादि कूटत्वं–न्यूनाधिकत्वं तेन व्यवहारः–परद्रव्यावहरणं न्यूनया ददाति अधिकया गृह्णाति । एतौ च [तत्प्रतिरूप] कूटतुलाकूटमानव्यवहारौ यद्यपि वञ्चनापरिणामेन परधनग्रहणरूपतया व्रतभङ्गरूपौ तथापि क्षत्रखननादिकमेव चौर्यम्, इदं तु वणिक्कलोपजीवनमेवेति स्वकीयकल्पनामात्रमपेक्ष्यातिचारतयोक्ताविति । तदत्रैतान् स्तेनहृतादीन् कृतविस्मृतानतिचारांस्तृतीयेऽणुव्रते निन्दामि यद्वा "पडिक्कमे देसियं सव्वं" इति चतुर्थपादपाठः । तत्र विरतेर्यदतिचरितं तस्मात् प्रतिक्रामामि 'दैवसिकं' दिवसातिचरितं 'सर्वं' निरवशेषं खण्डनाविराधनादिरूपं यदनुष्ठितमिति गाथार्थः ॥ १४ ॥ साम्प्रतं परदारवर्जन-स्वदारसन्तोषलक्षणं चतुर्थव्रतातिचारप्रतिक्रमणमुच्यते—

व्या०—अपरिगृहीतागमनं १ इत्वरपरिगृहीतागमनं २ अनङ्गक्रीडा ३ परविवाहकरणं ४ कामे तीव्राभिलाषश्च ५ इति । एते पञ्च चतुर्थव्रतेऽतिचाराः । एतेषां चाऽयं विषयविभागः—

परदारवज्जिणो पंच हुंति तिन्नि उ सदारसंतुट्ठे । इत्थीए तिन्नि पंच य, भंगविकप्पेहिँ अईआरा ॥ ६० ॥

अपरिगृहीता [1]अनाथकुलाङ्गना तस्यां गमनं परदारवर्जकस्यातिचारः, लोके तस्याः परदारत्वेन रूढत्वात् । कामुककल्पनया तु स्वभर्त्रादेरभावतोऽपरदारत्वादिति भावः । इत्वरं–स्वल्पकालं परिगृहीता या केनचित् काचिद्वेश्या भाटीप्रदानेन स्ववशीकृता तस्यां गमनं–मैथुनासेवनं परदारवर्जकस्यातिचारः, तस्यास्तावन्तं कालमर्थदानतः परेण परिगृहीत्वेन परदारत्वात् । वेश्यामेवैतां याम्यहं, न परकलत्रं इति स्वकल्पनामात्रतस्तु वेश्यारूपत्वादिति भावः । एतौ च द्वावपि स्वदारसन्तोषिणोऽतिचारतया न सम्भवतः स्वदारव्यतिरेकिण्याः सर्वस्या अपि स्त्रिया तेन प्रत्याख्यातत्वात् तद्गमने व्रतभङ्गस्यैव प्राप्तेरिति भावः । "अणंग" त्ति अनङ्गक्रीडा सा हि अतीवकामाभिलाषेण परिसमाप्तरतस्याऽप्याऽऽहार्यैः स्थालकादिभिः योषिद्वाच्यप्रदेशासेवनं, यद्वा अनङ्गः–कामस्तत्प्रधानक्रीडा–अधरदशना-ऽऽलिङ्गन-कुचमर्दनादिका निधुवनमेव व्रतविषयो नैवेति भावनया परदारेष्वेनां कुर्वतः परदारवर्जकस्यातिचारः । एवं [2]स्वदारतोषिणोऽपि परदाराद्ष्वेतां कुर्वतोऽतिचारता वाच्या । योषितस्त्वनयैव भावनया पुरुषे आलिङ्गनादि कुर्वत्या अतिचारता । परेषां–स्वकीयापत्यव्यतिरिक्तानामपत्यानां कन्याफललिप्सया स्नेह-सम्बन्धादिना वा विवाहस्य विधापनं परविवाह-

१ विधवाकन्यायाः ॥ २ °दारसंतोषिणोऽपि परदारादिष्वेतां सं.२ ॥

करणं, स्वापत्येष्वपि सङ्ख्याभिग्रहो न्याय्यः, इह च परदारवर्जक-स्वदारसन्तुष्टयोर्योषितश्च त्रयाणामप्यतिचारः सम्भवति, यदा हि परदारादिषु मैथुनं न कुर्मो न कारयाम इत्यभिग्रहः स्यात् तदा परविवाहकरणेऽर्थतो मैथुनस्य तेषु कारणमनुष्ठितं भवति अतो भङ्गः, विवाह एवायं मया विधीयते न परदारादिषु मैथुनमिति भावनया तु व्रतसापेक्षत्वादभङ्ग इत्यतिचारता, यद्वा पराणाम्-उत्कृष्टानां उत्कृष्टसङ्ख्यानामित्यर्थः विवाहानां करणं-भूरिशः परिणयनं, स्वदारसन्तोषिणो हि भूरिपरिणयने तदवस्थेऽविरतिरित्यतिचारः, योषितो हि पुरुषेण क्रियमाणं त्रिचतुःसङ्ख्यं परिणयनं दृश्यतेऽधुनापि । "तिव्वअणुरागे" त्ति कामे तीव्राभिलाषः । तत्र कामे-कामोदयजन्ये मैथुने अथवा सूत्रणात् सूत्रम्, इति कामे कामभोगेषु तत्र समयपरिभाषया कामौ शब्द रूपे भोगा गन्ध-रस-स्पर्शाः तेषु तीव्राभिलाषः-अत्यन्ततदध्यवसायः । यद्वा कामे कामभोगेषु तीव्रानुरागे सति सद्भोगानन्तरं तद्भोगेऽप्यतृप्तस्तु चेतोऽभिरमते वृद्धादिपत्नीनां च मुखस्थित्यतिचारः । अयमपि त्रयाणामपि पूर्वोक्तानामतिचारतया युज्यत एव । यद्यपि हि स्वदारादिषु तीव्राभिलाषस्तेषां साक्षादप्रत्याख्यातत्वात् मुत्कल एवेति कुतस्तत्करणेऽप्यतिचारसम्भवः, तथाऽप्यसौ न विधेयो यतो विदितजिनवचनः श्रावकः श्राविका वाऽत्यन्तपापभीरुतया ब्रह्मचर्यं चिकीर्षुरपि यदा वेदोदयाऽसहिष्णुतया तद्विधातुं न शक्नोति तदा यापनामात्रार्थं स्वदारसन्तोषादि प्रतिपद्यते, अतीव्राभि[1]लाषोऽपि च यापनायाः सम्भवात्, तीव्राभिलाषोऽर्थतः प्रत्याख्यात एवेति तत्करणे व्रतसापेक्षत्वे च भङ्गाभङ्गरूपत्वादतिचारता । ननु योषितोऽनङ्ग-



१ °भिलाषिणोऽपि मं.२ ॥

क्रीडादयस्त्रयोऽतिचारा भाविताः पञ्चातिचारपक्षस्तु तस्याः कथं भाव्यते ? उच्यते–यदा स्वकीयपतिः सापत्न्या वारकदिने परिगृहीतो भवति तदा सपत्नीवारकमतिक्रम्य तं परिभुञ्जानाया आद्या(द्वितीया)तिचारोऽपि सम्भवति, द्वितीय(प्रथम)स्त्वतिक्रमाद्यवस्थायां परपुरुषमभिसरन्त्याः । नवरं तदध्यवसाय-तदर्थप्रवृत्ति-तद्ग्रहण-तत्परिभोगरूपा एतेऽतिक्रम-व्यतिक्रमा-ऽतिचारा-ऽनाचाराः क्रमशः चत्वारोऽपि द्रष्टव्याः । एवमेतदनुसारतोऽन्यत्राप्याद्यपदत्रयेऽतिचारता भावनीया अतिक्रम-व्यतिक्रमयोरप्यतिचारभेदत्वात्, चतुर्थपदे तु विवक्षितव्रतभङ्गः । तदित्थं [1]पञ्चातिचारा योषितोऽपि भाविताः । तदस्मिंश्चतुर्थव्रतातिचारे प्रमादादिना यदतिक्रान्तं तस्मात् प्रतिक्रामामि दैवसिकं सर्वमिति । यदपि सूक्ष्मं परयुवतिदर्शनं सम्भाषणादिकं सविकारं सविभ्रमं व्रतविराधनाहेतु तदपि च प्रतिक्रामामि । उक्तं च—

वज्जेज्जा मोहकरं, परजुवईदंसणाइ सविकारं । एए खु मयणठाणा, चारित्तपाणे [2]विणासंति ॥ ३१ ॥

तदत्र कामभोगेषु गृद्धिमकुर्वन् श्रावकोऽल्पबन्धको यथासौ पूर्वमुनिगदितः श्रावकोऽत्रेदं संविधानकं—

किल कस्मिंश्चित् सन्निवेशेऽत्यन्तस्नेहसम्बन्धं भ्रातृद्वयं निवसति । तयोर्मध्यादन्यदा गुरुसमागमे तत्र धर्मश्रवणादुत्पन्नप्रव्रज्यापरिणामो धन-धान्यादि परित्यज्य गुर्वन्तिके व्रतं जग्राहैको भ्राताऽतीवोपशमपरो धर्माराधनोद्यतोऽजनि । अन्यदा प्रागुक्तसन्निवेशासन्ना विहारक्रमेण समागताः सूरयः । सोऽपि च साधुः समागतो गुरुभिः सह, स च गुरूणां निवेद्य सञ्ज्ञातदर्शनाय ग्रामं प्रविष्टः, दृष्टा [3]भ्रातृजाया पृष्टा च क्व त्वदीयो भर्ता? सा प्राह–क्षेत्रं गतः, तत्समये

1 पञ्चाप्य° सं.२ ॥ 2 विणासिंति सं २ ॥ 3 दृष्टा लघुभ्रातुर्भार्या सं.२ ॥

पूरेणागता तदन्तरा सरित् । प्रतिलाभितश्चोचितसमये तयाऽसौ प्रासुकाहारेण, उक्ता च सा मुनिना भोजनानन्तरं, यथा-निजभर्तुः कथय, यदि नद्यां न शक्नोपि गन्तुं ततो वक्तव्यं त्वयेदं हे नदि! यदि मदीयज्येष्ठसाधुना न कदाचिद् भुक्तं ततो मम्यं वितर मार्गमिति । तया तथैव कृते दत्तमार्गा गता सा पत्युः समीपम्, कथितः सर्वोऽपि मुनिवृत्तान्तः तत् श्रुत्वा पत्या प्रोक्ता, व्रज त्वं गृहं, यदि नद्या निषेधितो ततो वक्तव्या सा नदी मद्वचनेन हे नदि! यदि मदीयभ्रात्रा केन कदाचिदपि भोगा (नैव) भुक्तास्ततो मम देहीति मार्गमिति । एवं कृते लब्धमार्गा सा समागता गृहं चिन्तयामास सविस्मया सती, 'प्रेक्षध्व कीदृशं चरितमेतयोर्भ्रात्रोः, किं देवता प्रसन्ना, किं वा प्रयोगः कश्चिदेनयोरिहार्थे, एवं चिन्तातुराया' समागतस्तत्पतिर्गृहम्, तां तथा समीक्ष्य प्रोक्ताऽसौ तेन, किं भद्रे! त्वं चिन्तापरवशा दृश्यसे, किं पराभूताऽसि केनापि? न हि न हि किन्त्वनयोरपि भ्रात्रोर्युष्मदीयं चोद्यमीदृशं दृष्ट्वा विस्मयाकुलिताऽहम् । अथ प्रोक्ते तत्पतिः, मुग्धे! न जानासि तस्यमथार्थं शृणु! स हि साधुर्नित्यमुपोषित यथास्तेऽनवरतनिरवद्याहारत्वात् । यदुक्तम्-" निरवद्याहाराणं, साहूणं निच्चमेव उववासो ॥ त्ति "

मम पुनः पामाकण्डूयनकल्पमसारमशुचिकिम्पाकफलतुल्यं परिणामविरसं विषयासेवनमहं सेवे उपरोधमात्रतया विगतप्रतिबन्धो न पुनर्भोगतः, अतोऽहं स्नामि घटशतेन न च बिन्दुनाऽपि स्पृश्ये, ततोऽहं पर्वतिथिषु कल्याणकाष्टाह्निकादिनेषु च परिवर्ज्य सम्भोगं रात्रावपि सकृत्सेवनादसेव्यहम् इत्यादिवचनैः प्रबोधिता भार्या । इत्येवं

१ प्रेक्षध्वम् ख २ ।

कामभोगेषु गृद्धिर्न कार्येत्यलं प्रसङ्गेनेति गाथार्थः ॥ १६ ॥

उक्तं चतुर्थव्रतातिचारप्रतिक्रमणम् । साम्प्रतं स्थूलपरिग्रहविरमणलक्षणस्य पञ्चमस्य तदुच्यते, तत्र परिगृह्यते-स्वीक्रियते मोहोदयादविवेकिभिरिति परिग्रहः, स च स्थूल-सूक्ष्मभेदाद् द्विविधः । तत्र परकीयेष्वपि वस्तुषु य ईषन्मूर्च्छापरिणामः स सूक्ष्मः, स्थूलः पुनः सचित्ता-ऽचित्त-मिश्रभेदतः त्रिविधः, सूत्रोक्तधनधान्यादिभेदतो नवधा वा तस्य स्थूलवस्तुपरिग्रहस्य गुरुमूले कृतपरिमाणस्य कथञ्चित् सम्पन्नातिचारस्य प्रतिक्रमणायाह—

एत्तो अणुव्वए पंचमम्मि आयरियमप्पसत्थम्मि । परिमाणपरिच्छेए, एत्थ पमायप्पसंगेणं ॥ १७ ॥

व्या० "एत्तो" त्ति अतश्चतुर्थाणुव्रतानन्तरमणुव्रते 'पञ्चमे' उपन्यासक्रमप्रामाण्यात् पञ्चमसङ्ख्यात्मके यदा तु साधूनां चतुर्यामो धर्मस्तदापि श्रावकाणां सर्वतीर्थेषु पञ्चाणुव्रतिक एव तद्धर्म इति पञ्चमे अणुव्रते सङ्ख्यानं युक्तमेव, तत्र यद् 'आचरितम्' आसेवितमप्रशस्ते भावे सति । क्व विषये यदाचरितम्? "परिमाणपरिच्छेए" परिमाणं-द्विपदादेद्रव्यादिसङ्ख्यानं तस्य परिच्छेदः-नियतविभाग इच्छापरिमाणत एतावतामूर्ध्वमग्रहणं परिमाणपरिच्छेदः, कोऽर्थः? गुरुसमीपे स्थूलनवविधपरिग्रहप्रत्याख्यानकालगृहीतप्रमाणोल्लङ्घनेन यदतिचरितम् । 'अत्र' धन-धान्यादिस्थूलखीकृतपरिग्रहप्रमाणस्यातिक्रमे 'प्रमादप्रसङ्गेन' लोभाख्यप्रमादवशतः । एतेन गृहिणा यत् स्वलाभाय पण्यमुपगृहीतं

१ यद्यपि सा° सं. १ ॥

विक्रीयमाणे स्वद्रव्यप्रमाणादतिरिच्यते तद् यदि न विक्रीणाति किन्तु तद् द्रव्यं शासनोपष्टम्भकसाधारणे प्रक्षिपति चेत् तदा नातिचार इति वृद्धा मन्यन्ते । अत्र यदतिचरितं तत्र दैवसिकं प्रतिक्रामामीत्युत्तरगाथापदेन सम्बन्ध इति गाथार्थः ॥ १७ ॥ यदतिचरितं तदाह—

धण धन्न खेत्त वत्थू, रूप्प सुवन्ने य कुवियपरिमाणे । दुपए चउप्पयम्मी, पडिक्कमे देसियं सव्वं ॥ १८ ॥

व्या० इह किल धान्य-रत्न-स्थावर-द्विपद-चतुष्पद कुप्यभेदेन सामान्यतः षड्विधो गृहिणामर्थपरिग्रहः, विशेषभेदतश्चतुःषष्टिविधः । तत्र धान्यानि यवादीनि २४, रत्नानि सुवर्णादीनि २४, क्षेत्र-वास्तु-वृक्षभेदतस्त्रिधा स्थावरोऽर्थः, मानुष-रथादिभेदतो द्विपदोऽर्थो द्विधा, चतुष्पद गवा-ऽश्वादि दशधा, ताम्रकलशादिकमनेकविधमप्येकं कुप्यम् । तत्र धान्यादिषड्विधार्थस्य प्रतिभेदाभिधायि गाथापञ्च(सप्त)कं तद्यथा—

"धन्नाइं चउवीसं, जव १ गोहुम २ सालि ३ वीहि ४ सट्ठीया ५ ।
'कोद्दव ६ अणुया ७ कंगू, ८ रालग ९ तिल १० मुग्ग ११ मासा १२ य ॥ १ ॥ ६२ ॥
अयसि १३ हिरिमंथ १४ तिउडग १५ निप्फाव १६ सिलिंद १७ रायमासा १८ य ।
इक्खू १९ मसूर २० तूयरी, २१ कुलत्थ २२ तह धन्नग २३ कलाया २४ ॥ २ ॥" ॥ ६३ ॥

एतानि प्रायः प्रसिद्धानि । नवरं षष्टिकाः—शालिभेदाः, कङ्गु (:) सुराष्ट्रप्रसिद्धः, तद्भेदो रालकः, हिरिमन्थाः—

१ कुद्दव सं २ ।

कृष्णचनकाः, निष्पावाः-वल्लाः, राजमाषाः-चवलकाः, धान्यं-कुस्तुम्भरी, कलायाः-वृत्तचनकाः इति धान्यभेदाः २४ । रत्नानि २४—

"रयणाइं चउवीसं, सुवन्न १ तउ २ तंब ३ रयय ४ लोहाइं ५ ।
सीसग ६ हिरण्ण ७ पासाण ८ वयर ९ मणि १० मोत्तिय ११ पवालं १२ ॥ ३ ॥ ६४ ॥
संख १३ तिनिसा १४ ऽगुरु १५ चंदणाइँ १६ वत्था १७ ऽमिलाइँ १८ कट्ठाइं १९ ।
तह चम्म २० दंत २१ वाला, २२ गंधा २३ दव्वोसहाइं २४ च ॥ ४ ॥" ॥ ६५ ॥

प्रसिद्धान्यमूनि, नवरं रजतं-रूप्यं, हिरण्यं-रूपादि, पाषाणादि (त्रि)जातिरत्नानि, मणयो-जात्यानि, तिनिसः-वृक्षविशेषः, अमिलानि-ऊर्णावस्त्राणि, काष्ठादीनि-श्रीपर्णादिफलकादीनि, चर्माणि-सिंहादीनां, दन्ताः-गजादीनां, वालाः-चमर्यादीनां, द्रव्यौषधानि-पिप्पल्यादीनि ।

"भूमी घरा य तरुगण, तिविहं पुण थावरं मुणेयव्वं । चक्कारबद्ध-माणुस, दुविहं पुण होइ दुपयं तु ॥५॥" ।६६।
भूमिः-क्षेत्रं, गृहाणि-प्रासादाः, तरुगणाः-नालिकेर्यादयारामाः। चक्कारबद्धं-गन्त्र्यादि, मानुषं दासादि, द्विधा द्विपदोऽर्थः।

"गावी १ महिसी २ उट्टी, ३ अय ४ एलग ५ आस ६ आसतरगा ७ य ।
घोडग ८ [1]गद्दह ९ हत्थी, १० चउप्पयं होइ दसहा तु ॥ ६ ॥" ॥ ६७ ॥

---

[1] गद्दभ सं. १ ॥

एते प्रतीताः, नवरं अश्वाः–बाह्लीकादिदेशोत्पन्ना जात्याः । अश्वतराः–वेसराः, अजात्या घोटकाः ।

"नाणाविहोवगरणं, णेगविहं कुप्पलक्खणं होइ ।

ताम्र कलश कच्चिल्लादिजातितः कुप्यमेकविधं व्यक्तितोऽनेकविधम् ।

एसो अत्थो भणिओ, छव्विह चउसट्ठिभेओ ऊ ॥ ७ ॥" ॥ १८ ॥

तस्याप्ययद्रूपे धान्येषु–व्रीह्यादिपूपयोगाद्धान्यस्य, धान्यस्य च क्षेत्रे वृष्टि-सारण्युभयसम्भवे सम्भव इति क्षेत्रस्य, तच्च क्षेत्रोत्पन्नमपि क्व परिभुज्यते स्थाप्यते चेति वास्तुनः खातोच्छ्रितोभयरूपस्य, सम्पुष्टाङ्गश्च विभूषायै यतते न चासौ रूप्य सुवर्णाभ्यां विना अतो रजत हेम्नोर्ग्रहणं, चकाराद् मण्यादीनां, गृहविधो न कुपितं–गृहोपस्कर विना निर्वहति गृहोपस्करावयवकुपितस्य च भूरिश उपयोगाज्जीवितस्यापि च गृहस्थावस्थायामतीवप्रमत्तत्वात् परिमाणे न सस्मृतिरिति पूर्वोपात्तेऽपि "परिमाणपरिच्छेए" इत्यनेन गतेऽपि परिमाणे इति पुनरुच्चारणं न दोषाय, न चैतत् कुपिताद्युपकरणं श्रीमद्भिः स्वयं व्यापारणीयमिति द्विपदस्य दासी-दास-मन्त्री-रथादिरूपस्य, चतुष्पदस्य गवा-ऽश्वोष्ट्रादिरूपस्य ग्रहणम् । नवविधे स्थूलवस्तुपरिग्रहव्रते पञ्चातिचारा वर्जनीयाः । तत्र प्रकृतगाथयैव धनधान्यादिभेदानां द्वयेन द्वयेन एकैकोऽतिचारः कुपितेनैकः पञ्चमः । तद्यथा–धन धान्यप्रमाणातिक्रमः १, क्षेत्र वस्तुप्रमाणातिक्रमः २, प्रत्याख्यानकालगृहीतप्रमाणोल्लङ्घनमतिक्रमः सर्वत्र । हिरण्यसुवर्णप्रमाणातिक्रमः ३, द्विपद-चतुष्पदप्रमाणातिक्रमः ४, कुप्यप्रमाणातिक्रमः ५, । तत्र "धण धन्न" त्ति तत्र धनं गणिम-धरिम-मेय-परिच्छेद्यभेदात् चतुर्विधम् । तत्र गणिमं पूगफलादि, धरिमं

गुडादि मेयं घृतादि, परिच्छेद्यं माणिक्यादि, धान्यं व्रीह्यादि, एतत्प्रमाणस्य बन्धनतोऽतिक्रमोऽतिचारो भवति। यथा–कृतधनादिपरिमाणः कोऽपि पूर्वलभ्यमन्यद्वा धनादिकं कस्यापि पार्श्वे लभते तच्च व्रतभङ्गभयात् चतुर्मासादिपरतो गृहगतधान्यादिविक्रये वा कृते गृहीष्यामीत्येवम्भूतबन्धनेन वचननियन्त्रणात्मकेन मूटकादिबन्धरूपेण वा सत्यङ्कारदानादिस्वरूपेण वा स्वीकृत्य यदा दायकादिगेह एव तद्धरति तदाऽतिचार इति। "खेत्त-वत्थु" त्ति तत्र 'क्षेत्रं' सस्योत्पत्तिभूमिः, तच्च सेतु-केतु-उभयभेदात् त्रिविधम्। तत्र सेतुक्षेत्रमरघट्टादिसेक्यं, केतुक्षेत्रं पुनराकाशोदकनिष्पाद्यं, उभयक्षेत्रं तु तदुभयहेतुकमिति 'वास्तु' अगारं गृहमुच्यते। तत् त्रिविधं खातमुच्छ्रितं खातोच्छ्रितं च। तत्र खातं भूमिगृहादि, उच्छ्रितं भूम्युपर्युच्छ्रयेण कृतं, उभयं तु भूमिगृहस्योपरि प्रासादः। एतयोश्च क्षेत्र-वास्तुनोः प्रमाणस्य योजनेन क्षेत्रान्तरादिमीलनेनातिक्रमोऽतिचारो भवति। तथाहि–किलैकमेव मे क्षेत्रं वास्तु वेत्यभिग्रहवतोऽधिकतरदभिलाषे सति व्रतभङ्गभयात् प्राक्तनक्षेत्रादिप्रत्यासन्नं तद्गृहीत्वा पूर्वेण सह तस्यैकत्वकरणार्थं वृत्याद्यपनयेन तत् तत्र योजयतो व्रतसापेक्षत्वात् कथञ्चिद्विरतिबाधनाच्चातिचार इति। "रुप्प-सुवण्णे य" त्ति रूप्यं-रजतं हिरण्यमेकोऽर्थः, सुवर्णं प्रसिद्धं, तत्प्रमाणस्य प्रदानेन वितरणेनातिक्रमोऽतिचारो भवति। यथा–केनापि चतुर्मासाद्यवधिना हिरण्यादिप्रमाणं विहितं ततस्तेन तुष्टराजादेः सकाशात् तदधिकं तत् कथमपि लब्धं तच्च व्रतभङ्गभयात् पूर्णे व्रतावधौ ग्रहीष्यामि इति भावनयाऽन्यस्य हस्ते दत्वा मुञ्चतीति व्रतसापेक्षत्वादतिचार इति। "कुविय" त्ति 'कुप्यं' शयना-ऽऽसन-कुन्त-खड्ग-भाजन-कचोलकादिगृहोपस्कररूपं तत्प्रमाणस्य भावेन पर्यायान्तररूपेणातिक्रमोऽतिचारो भवति, यथा–किल केनापि कचोलकदशक-

लक्षणं कुप्यमानं कृतं कथञ्चित् तदाधिक्यसम्भवे सति व्रतभङ्गभयाद् भञ्जयित्वा चतुर्भिरपि पर्यायान्तरेण दशैव कारयतः सङ्ख्यापूरणात् स्वाभाविकसङ्ख्याबाधनाच्चातिचार इति । "दुपए चउप्पयम्मि" त्ति 'द्विपदं' कलत्र-दासी-दास-कर्मकर-शुक-सारिका-रथ-गन्त्र्यादि 'चतुष्पदं' गवा-ऽश्वादि तयोर्गतं प्रमाणं तस्य कारणेन गर्भविधापनेनातिक्रमोऽतिचारो भवति, यथा—केनापि किल संवत्सरावधिना द्विपद-चतुष्पदानां परिमाणं कृतं तेषां संवत्सरमध्याप्रसवेऽधिकद्विपदादिभावतो व्रतभङ्गः स्यात् अतस्तद्भयात् कियन्तमपि कालमतिवाह्य गर्भग्रहणं कारयतोऽतिचारः, गर्भगताऽधिकद्विपदादिभावाद् बहिरनिर्गमनेन तदभावकल्पनाच्च व्रतभङ्गाभङ्गरूपोऽतिचारः । एतच्च नवविधपरिग्रहे यत् प्रमाणं कृतं तन्मात्ययतिचरितं लोभादिप्रमादात् परिमाणव्रतमतिक्रान्तं तस्मात् प्रतिक्रामामि मिथ्यादुष्कृतादिना-ऽऽत्मानं निवर्तये दैवसिकं सर्वमिति । यदपि सन्तोषातिक्रमेण मनसाऽतिक्रान्तं तदपि च । उक्तं च—

"भाविज्जइ[1] संतोसं, गहियमियाणिं अयाणमाणेणं । थेवं पुणो न एवं, गिण्हिस्सामी न चिंतेज्जा" ॥ ६९ ॥

इति गाथार्थः ॥ १८ ॥ गतं पञ्चमम् । उक्तमणुव्रतातिचारप्रतिक्रमणम् । साम्प्रतं गुणव्रतानामुच्यते । अणुव्रतानि च मूलगुणा उच्यन्ते श्रावकधर्मतरोर्मूलकल्पत्वात् । दिग्व्रतादीनि तु तदुपचयलक्षणगुणानिबन्धनत्वात्मस्तरा विभ्रति स्तत्सानि श्रावकधर्मद्रुमस्य शाखा-प्रशाखाकल्पान्युत्तरगुणा इत्याख्यायन्ते । उत्तररूपा गुणा उत्तरगुणा उपचयहेतव इत्यर्थः, ते च उत्तरगुणा दिग्व्रतादयः सप्त, तत्रोर्ध्वाधस्तिर्यग्दिग्गमनपरिमाणकरणलक्षणं तावद्दिग्व्रतमुच्यते तच

1 भाविज्जय सं० सं २ ।

[1]दिक्त्रयविषयत्वात् त्रिविधं तदुक्तम्—

"तिविहं दिसिवयं खलु, उड्ढाहोतिरियदिसिविभाएण । तासु गमणस्स माणं, दिसिव्वयं तमिह नायव्वं" ॥ ७० ॥

इह च सूत्रकृत् सङ्क्षेपतो दिग्व्रतस्वरूपं तदतिचारपञ्चकं च यु(ग)पदेवैकगाथायां (थया) सूचयंस्तदतिचारनिन्दामाह–

**गमणस्स उ परिमाणं, दिसासु उड्ढं अहे य तिरियं च । वुड्ढि सइ अंतरद्धा, पढमम्मि गुणव्वए निंदे ।१८।**

व्या० गम्यत इति गमनं लोभाद्यभिभूतप्राणिनां गतिक्रिया तस्य परिमाणं योजनैरियत्ताकरणं, क्व विषये? अत आह–"दिसासु" दिक्षु सामान्येन दिग्विषये इत्यर्थः । विशेषत आह–ऊर्ध्वमधस्तिर्यग्दिक्षु परिमाणकरणं प्रथमं गुणव्रतं । दिशो ह्यनेकप्रकारा वर्णिता शास्त्रे, तत्र सूर्योपलक्षिता पूर्वा शेषाश्च पूर्वदक्षिणादिकास्तदनुक्रमेण द्रष्टव्याः । तत्रोर्ध्वदिक्परिमाणकरणं ऊर्ध्वदिग्व्रतम्, एतावती दिगूर्ध्वं पर्वताद्यारोहणादवगाहनीयाः न परत इत्येवम्भूतम् । अधोदिक्परिमाणकरणमधोदिग्व्रतम् एतावत्यधोदिक् अन्धकूपाद्यावतरणादवगाहनीया न परत इत्येवंरूपम् तिर्यक्परिमाणकरं तिर्यग्दिग्व्रतम् । एतावती दिक् पूर्वेणावगाहनीया, एतावती दक्षिणेन इत्यादि न परत इत्येवमात्मकम् । तदित्थं त्रिधा दिक्प्रमाणकरणं प्रथमं सूत्रक्रमप्रामाण्याद् । गुणाय व्रतं गुणव्रतमिति । अस्मिन् हि सत्यवगृहीतक्षेत्राद्बहिः (ग्रं० १०००) स्थावर–जङ्गमप्राणिगोचरो दण्डः परित्यक्तो भवतीति गुणः । इति व्रतस्वरूपम् । अथ धनधान्यादिपरिमाणस्य यथा परिग्रहव्रतत्वमिष्यते तथा दिक्परिमाणस्याप्येतावन्मया गन्तव्यतया परिगृहीतत्वात् परिग्रहत्वमेव

१ °क्त्रयव्रतविषय° स. २ ॥

युज्यते कथं दिग्व्रतत्वं?, नैवम्, अन्तर्भोग-परिभोगनिमित्तकवस्तुनो धनधान्यादेः स्वीकृतस्यैवेयत्तया परिग्रहणात् परिग्रहत्वमिष्यते दिक्षु चोर्ध्वाधस्तिर्यग्दिग्रूपे गन्तव्यस्यैव परिमाणकरणाद्दिग्व्रतत्वमेव युज्यते अन्तर्भोग-परिभोग-भावस्याभावात्। अधुनाऽस्यैव पञ्चातिचारा अत्रैव सूचिता "वुड्ढि" त्ति ऊर्ध्वाधस्तिर्यग्दिग्रूपे वृद्धिशब्दयोजनाद् ऊर्ध्व-वृद्धिः–ऊर्ध्वदिक्प्रमाणातिक्रमः, अधोवृद्धिः–अधोदिक्प्रमाणातिक्रमः, तिर्यग्वृद्धिः– तिर्यग्दिक्प्रमाणातिक्रमः। अपरा च वृद्धिरिति भीमन्यायेन क्षेत्रवृद्धिः। "सइअंतरद्ध" त्ति स्मृतेरन्तर्धा स्मृत्यन्तर्धा अन्तर्धानम्–आच्छादनं विस्मरणमित्येकोऽर्थः। वृद्धयश्च स्मृत्यन्तर्धा चेति समासः। एताः किं? प्रथमे गुणव्रतेऽतिचाराः स्युरिति वाक्यशेषः। तत्रोर्ध्व-दिक्प्रमाणातिक्रमः–यावत्परिमाणमूर्ध्वदिशि परिगृहीतं तस्यातिलङ्घनम्, अधोदिक्तिर्यग्दिक्प्रमाणातिक्रमयोरप्येवं ज्ञेयम्, नवरं चैत्य-साधुवन्दनाद्यर्थमूर्ध्वादिदिक्प्रमाणातिक्रमेण परतो गच्छतोऽपि नातिचारः स्यात् सूक्ष्मेक्षिकायां साधुरिवोपयुक्तस्य। यश्चोर्ध्वाधस्तिर्यग्दिक्रूपे गमनप्रमाणातिक्रमोऽतिचारः सोऽनाभोगादिना अतिक्रम-व्यतिक्रमादिना वा प्रवृत्तस्य द्रष्टव्यः, अन्यथा भङ्ग एव स्यात्। क्षेत्रवृद्धिस्त्वेवं भावनीया यथा—केनचित् सर्वास्वपि दिक्षु प्रत्येकं योजनशतात् परतो गमननियमः कृतः ततश्च पूर्वस्यां दिशि भाण्डं गृहीत्वा योजनशतं यावद्गतस्ततोऽपि परतो भाण्डं बहुतरं मूल्यमवाप्नोति अतोऽपरस्यां योजननवतिमेव यास्यामीति चेतसि व्यवस्थाप्य पूर्वस्यां दिशि दश योजनानि क्षेत्रवृद्धिं कृत्वा दशोत्तरं योजनशतं गच्छतस्तस्य व्रतसापेक्षत्वात् क्षेत्रवृद्धिलक्षणोऽतिचारः, स्मृत्यन्तर्धा च किं मया परिगृहीतं कया वा मर्यादया? इत्येवमननुस्मरणमित्यर्थः। 'स्मृतिमूलं हि नियमानुष्ठानम्' तद्भ्रंशे तु नियमत एव

तद्भ्रंश इत्यतिचारः। यथा केनापि पूर्वस्यां दिशि योजनशतं प्रमाणं कृतं गमनकाले च स्पष्टतया तत् प्रमादतो न स्मरति किं शतं पञ्चाशद्वा इति तेन चैवमुभयांशावलम्बिनि संशये पञ्चाशतमेव यावद्गन्तव्यं तत्परतोऽपि गच्छतोऽतिचारः। शतादपि परेण गच्छतस्तु भङ्गः। सर्वव्रतेष्वयमतिचारोऽवगन्तव्यः। तदेवं 'प्रथमे गुणव्रते' दिक्प्रमाणाख्ये यदतिचरितं "तन्निंदे" ति तस्मात् [1]प्रतिक्रमामि निवर्तेऽहम्। नन्वत्र नातिचारा दैशिका उपात्ताः तत् कस्यैषा निन्दा? इति, उच्यते, ऊर्ध्ववृद्ध्यादीनां स्वनामग्राहमुद्दिष्टानां निन्दा किमतिचारदैशिकग्रहणेन फलान्तराभावादिति गाथार्थः ॥ १९ ॥ उक्तं दिग्व्रतातिचारप्रतिक्रमणम्। साम्प्रतमुपभोग-परिभोगविरतिविषयातिचारप्रतिक्रमणस्यावसरः। स चोपभोग-परिभोगो द्विधा—भोजनतः कर्मतश्च। तत्र 'भोजनतो' भोजनमाश्रित्य बाह्याभ्यन्तरभोजनीयवस्तून्यपेक्ष्य इत्यर्थः। 'कर्मतः' क्रियां जीवनवृत्तिं बाह्याभ्यन्तरभोजनीयवस्तुप्राप्तिनिमित्तभूतामाश्रित्येत्यर्थः। तत्र 'उप' इति सकृदन्तर्वा भुज्यत इत्युपभोगः—अन्न-पानादिः, उपशब्दस्य सकृदर्थत्वात्। 'परी' ति पुनः पुनर्बहिर्वा भुज्यत इति परिभोगः—हिरण्य-भवन-स्त्री-वस्त्रादिः। अन्तर्भोगो वोपभोग उपशब्दस्यान्तर्वचनत्वात्, बहिर्भोगो वा परिभोगः परिशब्दस्य बहिर्वाचकत्वात्। तदुक्तम्—

उवभोगे विरईओ, तंबोला-ऽऽहार-पुप्फ-फलमाई। परिभोगे वत्थ-सुवन्नगाइयं इत्थि-गेहाई ॥ ७१ ॥

आह, ननु, यदि अत्र हिरण्यादय उपभोग-परिभोगशब्दवाच्याः तर्हि कर्मत इदं व्रतं नोपपद्यते कर्मणः क्रिया-

---

१ अत्र "क्रमो दीर्घः परस्मै" ४।२।१०९। इति सूत्रेण दीर्घत्वं समुचितं किन्तु सं. १ सञ्ज्ञकप्रतौ सर्वत्र 'प्रतिक्रमामि' इत्येव न्यस्तं तत्तु प्राकृतानुकरणमेव सम्भाव्यते इत्यत ऊर्ध्वं यत् सर्वत्र 'प्रतिक्रामामि' तद्द्वितीयप्रत्यानुसारेण ॥

रूपस्योपभुज्यमानस्य–परिभुज्यमानत्वयोरसम्भवात् । सत्यं, किन्तु कर्मणो वाणिज्यादेरुपभोगकरणत्वात् कारणे कार्योपचारात् कर्मणोऽप्रोपभोगपरिभोगवाच्यता विवक्षितेति । कर्मपक्षे उपभोगपरिभोगयोजना न कार्या इत्यन्ये, तदितोपभोग-परिभोगयोर्व्रतं नियतपरिमाणकरण एतावदिद भोक्तव्यमुपभोक्तव्यं वा अतोऽन्यन्न इत्येवरूपम् । तत्र भोजनतस्तावच्छ्रावकेणोत्सर्गतः प्रासुकैषणीयमचित्त(येनाचित्तेन) निरवद्याहारभोजिना च भवितव्यम् । तदभावे तु बहुसावद्यमशनादिकं परिहरति । तत्राशने तावत्

सव्वा य कंदजाई, सूरणकंदो य वज्जकंदो य । अल्लहलिद्दा य तहा, अल्लं तह अल्लकच्चूरो ॥ ७२ ॥
सत्तावरी विराली, कुमारि तह थोहरी गलोई य । ल्हसणं वंसकरिल्ला, गज्जर तह लोणओ लोढा ॥ ७३ ॥
गिरिकण्णि किसलपत्ता, कसेरुया थेग अल्लमोत्था य । तह लोण रुक्खछल्ली, खेल्लहुडो अमयवल्ली य ॥ ७४ ॥
मूला तह भूमिरुहा, विरुहाई ढक्क वत्थुलो पढमो । सूयर वल्लो य तहा, पल्लंको कोमलंबिलिया ॥ ७५ ॥
आलु य तह पिंडालु य, समभंगमहीड्डाइलक्खणओ । जाणेज्जऽणंतकायं, अन्नं पि जिणेहिं निद्दिट्ठं ॥ ७६ ॥

इति समयोक्तानन्तकायान् बहुबीजानि च मांसादिकं च वर्जयति । पाने मांस-रस-मद्यादि । खादिमे वट-पिप्पलोदुम्बर-प्लक्षका उम्बरिफलानि समये पञ्चोदुम्बरीत्याख्यया प्रसिद्धानि नियमयति । स्वादिमे तु मध्वादि । शेषेऽप्यल्पसावद्ये ओदनादावचित्तभोजित्वादिकं परिमाणनैयत्यं विधेयम् । यद्येवं वक्ष्यमाणसूत्रगाथायां श्रावकस्य प्रतिक्रम[ण]विधायिनः कृतबहुसावद्यादिवस्तुनियमस्य मद्यमांसादिविकृतिपरिहारिणः किमत्र प्रतिक्रमणाय मद्यमांसपदो-

पादानेन ?, सत्यमुक्तम् , अयमत्राभिप्रायः–कचित् कदाचित् कस्यापि लूताद्युपशमार्थं सद्वैद्योपदेशतो बाह्यपरिभोगेन स्वेदादिना 'ज्ञानाद्युपकरणत्वात्' फलवान् परिभोगो दृष्टः । 'भुजिः चात्र बहिष्परिभोगार्थनाभ्यवहारार्थे पदातिभोगवत्' इत्याचारवृत्त्युक्तवाक्यतः बह्वस्थिकपुद्गलविषयात् समाहितमिदम् । यद्वा कदाचित् कश्चिद्राजकुलादौ नियोगी श्रावको रसवत्यां व्याप्रियते तत्र च प्रायशो मद्य-मांसादेर्व्यापारणात् तस्मिः कर्तव्या भवति तच्छ्रावकस्य । प्रतिक्रामकः सन्नेवं प्रतिक्रमतीत्यपरेऽभिदधति । कर्मतोऽपि तावत श्राद्धेन कर्म न किञ्चित् कर्तव्यं निरारम्भतयैव स्थातव्यम् । अथैवं न निर्वहति तदा निस्तृंशजनोचितानि बहुसावद्यानि कोट्टपाल-गुप्तिपाललक्षणानि खरकर्माणि हल-मुशलोदूखल-शस्त्र-लोहविक्रयादिलक्षणानि च वर्जयित्वा अल्पसावद्यमेव कर्म विदधाति । साम्प्रतं मद्यादिनोपभोगपरिभोगविषयवस्तुविरत्यतिचारप्रतिक्रमणाय इमां गाथामाह—

मज्जम्मि य मंसम्मि य, पुप्फे य फले य गंधमल्ले य । उवभोगपरीभोगे, बीयम्मि गुणव्वए निंदे ॥२०॥

व्या० "मज्जं" ति मद्यं कसाय-गुड-मधुर-द्राक्षादिनीरसंयोगोद्भवं काष्ठपिष्टनिष्पन्नं वा । "मंसं" ति मांसं जलचर-स्थलचर-ख(खे)चरभेदात् त्रिधा पञ्चेन्द्रियपिशितं चशब्देन मधु-नवनीत-गर्जर-कन्दमूलादीनां बहुसावद्यानां ग्रहः । पुष्पाणि करीर-महुय(मधुक)-समुत्थानि चशब्दाद् बहुसावद्यत्रससंसक्ता अनन्तकाय-फो(ओ)ल्यादियुतपूपलिका-मोदकादे रात्रिभोजनस्य च ग्रहः । नवरं साधूनामिव श्रावकस्यापि रात्रिभोजननियम उपभोगव्रतगोचरत्वाद् उत्तरगुणरूपो दृष्टव्य इति मतम् । पुप्फाणं फलहे उत्तरेण मुवओगाओ पढममुचायाणं । फलानि पञ्चोदुम्बरीवृन्ताकीप्रभृतीनि ।

अनेनाखाद्यस्वादिमाहारः सूचितः, एतैरन्नरूपभोगः प्रतिपादितः । परिभोगस्तूच्यते "गंध मल्ले य" त्ति गन्धाः—वासाः कस्तूरिका कर्पूरा-ऽगुरु-धूपादयश्च गन्धाः घ्राणेन्द्रियप्रीणनीयाः, माल्यानि-मालायोग्यानि जाति शतपत्रिकादिपुष्पाणि, चशब्दात् वस्त्रा-ऽऽभरण-स्त्र्यादिग्रहः । उपभोगप्रीणितस्यैव परिभोगेच्छा प्रायशो भवतीति पूर्वं तस्योपन्यासः । मद्यपाने इह लोकेऽप्यमी दोषाः—

वैरूप्यं व्याधिपिण्डः स्वजनपरिभवः कार्यकालातिपातो, विद्वेषो ज्ञाननाशः स्मृति-मतिहरणं विप्रयोगश्च सद्भिः ।
पारुष्यं नीचसेवा कुल-बलतुलना धर्म-कामा-ऽर्थहानिः कष्टं भो षोडशैते निरुपचयकरा मद्यपानस्य दोषाः ॥७७॥

सुत्रे भत पय—मज्जस्स बहुदोसत्ते(त्त)णेण परमसुधायाणं । एत्थ लोइयमक्खाणयं—एगो तावसो छट्ठ-ऽट्ठम-दसम-दुवालसाइतवेण तणुईभूओ उड्ढं बाहाउ पगिज्झिय पगिज्झिय गामजाणुगो मरि दाहिणपाय समारोविय समारोविय सराभिमुहो अयावणभूमीए आयावेमाणो आयावेमाणो एगत्थ महाडवीए विहरइ । अह्वा तस्सुग्गतवकारिणमाभोइत्ता सक्को देवराया भीओ, नूणं परायित्तिसा एस देवाहिवई भविस्सइ, ता तस्स विग्घत्थं सुरंगणाओ पेसेइ जहा—गंतूण देवाणुप्पिया ! मणुयलोग त तावसं उवसग्गेऊण धम्माओ चालेहत्ति । तहत्ति भणिऊणं गयाओ ताओ । तवतेएण जहाइ(मि)याओ न तरतियमुवसप्पति । दूरत्थाहिं चेव गीतादिविहाणेण सिंगारण य समाराहिओ भणइ—वरं वरेह त्ति । भणिय च णाहिं—जइ सच्चं सच्चं करेहि, सो सव्वेहिं पत्तियावेइ । ताहिं भणियं—अम्हे निच्चु-गणपरिभोगेण गुणाहि । सो भणइ—न घडइ बंभयारीणमेयं ति । ताहि भणियं—जीए पुरओ तुमं आयावेसि तं

पडिमं भंजाहि। सो भणइ—न वट्टइ आराहणियं विणासेउं धम्मचारीणं। भणियं च णाहिं—जइ एवं छागं वहेत्ता मंसं खाहि। सो भणइ—न वट्टइ एवं तवस्सीणं। ताहिं भणियं—जइ एवं तो मज्जं पिबाहि। भणियं च णेण—महुभंडं पि ताव अपवित्तं किं पुण मज्जं ?। तओ भणियं ताहिं—सच्चभट्ठो सि अपेच्छणिज्ज! किं मुहा तम्मसि ?, सच्चभट्ठाणं नरएसु उववाओ। सो चिंतेइ—सच्चं भणंति। तो किं करेमि? मज्जं ताव सुद्धकारणं जं बंभणा चि गुडं हरडईउ नीरं पिहं पिहं भुंजंति। संयोगे वि न दोसो कहमण्णहा सोमपाणमदुट्ठं ति। पडिवण्णं तेण मज्जं। ताहे मत्तेण सव्वं पि कयं। मरित्ता गओ नरए। तम्हा मज्जमतिदुट्ठं। मज्जाहिंतो वि मंसं अइसंकिलिट्ठं संकिलिट्ठफलं च। तथा चागमः—चउहिं ठाणेहिं जीवा नरयाउयं बंधंति तं जहा—महारंभाए महापरिग्गहाए कुणिमाहारेणं पंचंदियवहेणं ॥ कुणिमं—मंसं। तत्थ य पंचंदियवधो नियमा। न हि नामजीवस्स विणासो किंतु जीवपाणाण इंदियाईणं। अओ मज्जाणंतरं तदुवन्नासो। तथा च—

मंसं पंचंदियवहविणम्मियं तह पयंडपावफलं। सुक्क-रस-रुहिर-कलमलदुगंधियं मुंच भयजणयं ॥ ७८ ॥

हिंसामूलममेध्यमास्पदमलं ध्यानस्य रौद्रस्य य—द्बीभत्सं रुधिराविलं कृमिगृहं दुर्गन्धपूयाविलम्।
शुक्रासृक्प्रभवं नितान्तमलिनं सद्भिः सदा निन्दितं, को भुङ्क्ते नरकाय राक्षससमो मांसं तदात्मद्रुहः ॥ ७९ ॥
मां स भक्षयितामुत्र, यस्य मांसमिहाद्म्यहम्। एतन्मांसस्य मांसत्वं, प्रवदन्ति मनीषिणः ।८०। अष्टक १८ श्लो. २ ॥
श्रुत्वा दुःखपरम्परामतिघृणां मांसाशिनां दुर्गतिं, ये कुर्वन्ति शुभोदयेन विरतिं मांसादनस्यादरात्।

सद्दीर्घायुरदूषित गतरुजो यान्तीह ते प्राणिनो, मर्त्येषु दृढभोगधर्ममतिषु स्वर्गापवर्गेषु वा ॥ ८१ ॥

अत्र कश्चिद्वावदूको ब्रूते—

भक्षणीयं भवेन्मांस, प्राण्यङ्गत्वेन हेतुना । ओदनादिवदित्येव, कश्चिदाहातितार्किकः ॥ ८२ ॥ अष्टक १७-१ ॥

ततो भक्ष्यौदनादेरपि प्राण्यङ्गसमानत्वेन मांसादिसादृश्य किं न भवति? अत्रोच्यते—प्राण्यङ्गत्वे तुल्येऽपि किञ्चिन्मांसं किञ्चिद्यामासमित्येवं लोके विदग्धैर्व्यवह्रियते तद्यथा—गोक्षीररुधिरादेः प्राण्यङ्गत्वेऽपि भक्ष्याभक्ष्यव्यवस्थितिः । तथा समानेऽपि स्त्रीत्वे भार्यास्वस्त्रादौ गम्यागम्यव्यवस्थितिः । तदुक्तम्—

भक्ष्य किञ्चिदिहास्ति वस्तु विदुषा किञ्चिन्न भक्ष्य पुनर्गोक्षीरादि यथा यथासृगपि च प्राण्यङ्गसाम्ये सति ।

इत्थ हन्त दुरन्तदुःखनरकप्रायोग्यमांसादिक, हेय किञ्चन सत्यचित्रमुचित खादेयमन्यत् पुन ॥ ८३ ॥

व्यवहारेऽपि यद्दुष्ट, विरुद्ध लोकशास्त्रयोः । तदभक्ष्य जिनैरुक्त, भक्ष्यमन्यत् तु निश्चितम् ॥ ८४ ॥

अत ओदनादेः प्राण्यङ्गत्वेऽपि न मांसादिसादृश्यं । मांस हि सङ्क्लेशपूर्वकं महद्दुःखोत्पादजीववधजन्य स्यात्, यस्मान्मार्यमाणस्य सञ्ज्ञिपञ्चेन्द्रियस्य यथा महद्दुःखं स्यात् न तथैकेन्द्रियाणाम्, तथा च—

चित्तं चेतयते भयं धृतभयः प्राणैर्वियोक्ष्ये हठा-द्वैवं कल्पयति महारमपि च त्रस्ते दृशौ पश्यतः ।

एन मारय भक्षयामि च वचः श्रोत्र शृणोति स्फुट, पूर्णाक्षोऽनुभवेद्यथा न विरस दुःख तथैकेन्द्रियः ॥ ८५ ॥

एव च—अपेयत्वान्मद्ये कृतविरतिरत्यन्तविरसे, अभक्ष्यत्वान्मांसे समुपहितसाधुव्रतगुणः ।

अलेह्यत्वाद्धन्यो मधुनि विरतः पञ्चफलतो, निवृत्तः स श्राद्धो भवति जिनधर्मस्थिरमतिः ॥ ८६ ॥

एतच्चोपभोगपरिभोगाख्यप्रकारद्वयेनाप्येकमेव व्रतम् । अत एवाह "उवभोगपरीभोगे" त्ति उपभोगपरिभोगविषये द्वितीये गुणव्रते योऽतिचारः कृतः तं "निंदे" त्ति तस्मात् प्रतिक्रमामि इति गाथार्थः ॥२०॥ अत्रापि भोजनतः पञ्चातिचारा वर्जनीयाः, तत्प्रतिक्रमणायाह—

सच्चित्ते पडिबद्धे, अपउल दुप्पउलिए य आहारे । तुच्छोसहिभक्खणया, पडिक्कमे देसियं सव्वं ॥ २१ ॥

व्या० 'सचित्ताहारपडिबद्धे' त्ति सचित्तपडिबद्धाहारः अप्पओ(उ)लिओसहिभक्खणया दुप्पउलिओसहिभक्खणया तुच्छोसहिभक्खणया । तत्र सचेतनाहारः पृथिव्यप्कायवनस्पतिजीवशरीरिणामभ्यवहरणमित्यर्थः । अयं चातिचारः कृतसचित्ताहारप्रत्याख्यानस्य कृततत्परिमाणस्य वाऽनाभोगादिना प्रत्याख्यातं सचेतनं कन्दादि भक्षयतोऽतिचारः । यद्वा सचित्तं प्रतीत्यातिक्रमादौ वर्तमानस्य । यद्वा, सचित्ते उक्खलाइसु छुन्नेसु चिंचिणिपत्ताइसु अपरिणएसु तहा उसिणोदयमपरिणयं तत्थ स(वे)त्रवा भुंजमाणस्स अईयारो ॥ "सचित्तपडिबद्धाहारे" ति सचित्ते-वृक्षादौ प्रतिबद्धस्य-गुन्दादेरभ्यवहरणम् । तथा सचित्तेऽस्थिके प्रतिबद्धं-सम्बद्धमाम्रगुलिकादौ पक्वत्वगादीति, खर्जूर-फलादि वा मुखे प्रक्षिप्य पक्वत्वगाद्येवाचित्तं भक्षयिष्यामि सचित्तं त्वस्थिकं त्यक्ष्यामीति बुद्ध्या सचित्तप्रतिबद्धस्याहारोऽतिचारः व्रतसापेक्षत्वात् । इह सर्वत्र निवृत्तिविषयीकृतप्रवृत्तावप्यतिचारभिधानम् व्रतसापेक्षप्रवृत्त्याऽनाभोगादिनिबन्धनप्रवृत्त्या च दृश्यम्, अन्यथा भङ्ग एव स्यात् । तथा "पउलियं" पक्वं भुग्नं न पउलियं अपउलियं ततश्चापक्वाया अग्न्य-

संस्कृतायाः ओषधेः–शालि-गोधूमादिधान्यरूपाया भक्षणता भोजनमतिचारः । इदमुक्तं भवति–पिष्टत्वादचेतनमिद-
मिति सम्भावनया सम्भवत्सचित्तावयवं बहुपसंस्कृतं सयः पिष्टकणिकादिकं भक्षयतोऽतिचारः । दुपलियं ग्रुम(म्मु)र्गं
अद्धपरिणयं च । ततो दुःपकाया वह्निना मस्तृनासंस्कृतस्वरूपत्वेन सम्भवत्सचित्तावयवाया ओषधेः पृथुकादिरूपायाः
पक्वबुद्ध्या भक्षणमः [नाम] अतिचारः । तुच्छा असारा ओष(ध)योऽनिष्पन्नकोमलमुद्गादिफलीरूपास्तद्भक्षणतोऽति-
चारः । आह, ननु यद्येताः सचेतनाः तर्हि तद्भक्षणं प्रथमातिचाराद्विशिष्यते । अथवाऽचित्तास्तर्हि नैवातिचार एव न
सम्भवति । सत्यं किन्तु योऽत्यन्तसावद्यभीरुतया सचित्तं प्रत्याख्याति तस्याचेतना अप्येता भक्षयतस्तथाविधतृप्त्य-
सम्पादकत्वात् लौल्यमेवावशिष्यते, तद्भक्षणे महती विराधना स्वल्पा च तज्जन्या तृप्तिः, इति विवेकिनाऽचित्तीकृता-
ऽचेतनीकृताप्येता न भक्षणीयाः, तद्भक्षणे वस्तुतो व्रतविराधनादतिचारः । तथा पर्वसु छित्वा इक्षुगण्डिकायाः भक्ष-
यतोऽपि तुच्छौषधिभक्षणम् । एवं रात्रिभोजन-मधु मद्य-मांसादिविषयव्रतेषु वस्त्रादिपरिभोगव्रतेषु चानाभोगातिक्र-
मादिनातिचाराः स्वयमभ्यूह्याः । इह तु पञ्चातिचारा इत्युपलक्षणमात्रमन्येषामिति । "पडिक्कमे" गर्हे दैवसिकमतीचा-
रमिति गाथार्थः ॥२१॥ इह चोपभोगपरिभोगव्रतस्य [तत्पाक]सावद्यकर्मणः? परिहारः फलम् । तत्र कर्मतो यदुपभोग-
परिभोगव्रतं तत्र खरकर्माङ्गारकर्मादिक पञ्चदशविधमुद्दिश्य तत्र कृतप्रत्याख्यानस्तदतिचारप्रतिक्रमणाय गाथाद्वयमाह–
इंगाली वण साडी भाडी फोडीसु वज्जए कम्मं । वाणिज्जं चेव य दंत लक्ख रस केस विस विसयं ॥२२॥
एवं खु जंतपीलणकम्मं निल्लंछणं च दवदाणं । सरदहतलायसोसं, असईपोसं च वज्जेमि ॥ २३ ॥

व्या०–द्वितीयगाथायाम् एव खुशब्द आदिगाथायां सम्बध्यते व्यवहितसम्बन्धानामप्यव्ययानां दर्शनात् । ततश्च 'एवं' उवभोगपरिभोगव्रतकरणे 'खु' निश्चयेन अङ्गारवाणिज्यादीन्यसतीपोषवर्जनावसानानि बहुदोषाणि वर्जयामि । भूयो वर्जनक्रियाभिधानमत्यादरख्यापनार्थम् । एवं योऽतिचारो जातस्तं वर्जयामीति गाथाक्षरार्थः । भावार्थस्तूच्यते "इंगालि" त्ति 'अङ्गारकर्म' अङ्गारकरणपूर्वकस्तद्विक्रयः । एवं यदन्यदपि वह्निसमारम्भपूर्वकं जीवनं इष्टिका-भाण्डकादिपाकरूपं तदङ्गारकर्मेति ग्राह्यम् सामान्यस्वभावत्वात् । तदुक्तम्—

इंगालविक्कयं इट्टवाय-कुंभार-लोहयाराण । सुवनार-भाडभुंजाइयाइकम्मं तमिंगालं ॥ ८७ ॥

अतिचारता चास्य कृततत्प्रत्याख्यानस्यानाभो(गा)दिनाऽत्रैव वर्तनात् १॥ वनकर्म यत्र समुदितं वनं क्रीत्वा ततः छित्वा विक्रीय च तल्लाभेन जीवति ।

फुल्ल-फल-पत्त-तण-कट्ठ-पणियकंदाइयाण विक्किणणं । आराम-कच्छियाकरणगं च वणकम्ममाहंसु ॥ ८८ ॥ २ ॥

शकटकर्म शकटानां घटनविक्रयवाहनरूपं ।

सगडाणं घडणघडावणेण तव्विक्कएण जा वित्ती । तं सागडियं कम्मं, तदंगविक्किणणमवि नेयं ॥ ८९ ॥ ३ ॥

भाटककर्म यत्र स्वकीयगन्त्र्यादिना परकीयं भाण्डं वहति अन्येषां वा भाटकेन शकटबलीवर्दादीन् अर्पयति ।

नियगुणवगरणेणं, परकीयं भाडएण जो वहइ । तं भाडकम्ममहवा, वसभाइसमप्पणंऽन्नेसिं ॥ ९० ॥ ४ ॥

स्फोटीकर्म उड्ड(त्तणगं)त्वं, यद्वा हलेन कुद्दालादिना वा भूमिदारणेन जीवनम्, यवादिधान्यानां सक्त्वादेः करणेन

विक्रयो वा । जय घणया गोहुम-मग्ग-मास-करडिप्पभीणघन्नाणं । सत्तुय दालि कणिका तन्दुल-करणाइ फोडणाय ।९१।

अहवा फोडीकम्मं, सीरेण भूमिफोडणं ज तु । उड्डत्तणगं च तहा, तहा य सिलवट्टयत्तं च ॥ ९२ ॥ ५ ॥

दन्तवाणिज्यं यत्र प्रथमत एव पुलीन्द्राणां हस्तिदन्तशङ्खप्रभृतिचर्मकेशादीनामानयननिमित्त मूल्य ददाति ततस्तेन गत्वा तदर्थं हस्त्यादीन् घ्नन्ति तद्विक्रयपूर्वकं जीवनम् ।

नह दंत चमर रुह्ला मेरिक उड्डा य सिप्पि सत्ता य । कत्थूरिय-पूइसमाइय च इह दंतवाणिज्ज ॥ ९३ ॥ ६ ॥

लाक्षावाणिज्यं सञ्जातजीवद्रव्यान्तरविक्रयोपलक्षणम् ।

लरक्षा धाहइ गुलिया मणसिल-हरियाल-वज्जलेवाणं । विक्किणण लक्खवणिज, तुवरियगन्धुरख(?)माईण ॥ ९४ ॥७॥

रसवाणिज्य मदिरादिविक्रयः ।

महु-मज्ज मंस-मक्खण चउन्ह विगईण जमिह विक्किणणं । रसवाणिज्जं तह दुद्ध-तेल्ल-घिय-दही(हि)पयमिईण ॥९५॥८॥

केशवाणिज्यं यत्र दासी-दास-गवोष्ट्र हस्त्यश्वादिजीवान् गृहीत्वाऽन्यत्र विक्रीणीते तत् ।

मणुयाण तिरियाण, विक्किणण [illegible] अन्नदेसे वा । केसवणिज्ज भण्णइ, गो-वाहह-अस्समाईण ॥ ९६ ॥ ९ ॥

विषवाणिज्य जीवघातप्रयोजनविष-शस्त्रादिविक्रयः तत् ।

विसवाणिज्ज भण्णइ, विस-लोहप्पहरणाण विक्किणण । घणुह सर-खग्ग-छुरिया-परसुय-कुद्दालियाईण ॥ ९७ ॥ १० ॥

यन्त्रपीडनकर्म यन्त्रेण तिलेक्षुप्रभृतीना यत् पीडनरूपं कर्म तत् । सिलोदूखल-मुशल-घरट्ट-कुद्दालादीनां च इह विक्रयस्तथा ।

सिल-उक्खल-मुसल-घरट्ट-कंकयाईण जमिह विक्कणणं । उच्छ(इक्खु)-तिलपीलणं वा, नं विंती जंतपीलणयं ।९८।११।

निर्लाञ्छनकर्म बलीवर्द-तुरगादीनां तिरश्चां यद् वर्धितकरण-कर्णपाटन-नाशावेधादिकरणं तत् ।

कन्नाण फालणं नासवेह वद्धिय य डंभणं तिरिसु । कंबलपुच्छच्छेयणपभिई निल्लंछणं भणियं ॥ ९९ ॥ १२ ॥

दवाग्निदानं दवाग्नेः—वनाग्नेः दानं—वितरणं क्षेत्रादिशोधननिमित्तं तच्च किल भूमिषु तरुणतृणरोहणार्थं केचित् कुर्वन्ति । "वणदवदाणमरन्ने, दवग्गिदाणं च जीववहजणयं" ॥ १३ ॥ सरो-हृद-तडागादिपरिशोषणमपि धान्यादिवपनार्थं केचित् कुर्वन्ति । तथा च—सर-दह-तलायसोसो, बहुजलयरजीवक्खयकारी ॥ १०० ॥

तत्र सरः स्वभावजमखातं हृदो नदीनां निम्नतरः प्रदेशः, तडागं खननसम्पन्नमुत्तानविस्तीर्णजलस्थानम् । एतेषां शोषणं गोधूमादीनां वपनार्थम् १४ ॥ असतीपोषं च 'वर्जयेत्' परिहरेत् । तत्र असतीजनस्य दासीजनस्य पोषणम् तद्भाटकोपजीवनार्थमेवमन्यदपि मार्जार-मयूर-मर्कट-कुक्कुट-कुर्कुर-सालहिकादीनां क्रूरकर्मकारिणां प्राणिनां पोषणं असतीजनपोषणम् ।

मज्जार-मोर-कुक्कड-सालहिय-कुकुराइणं (?)। दुट्ठित्थि-नपुंसाईण पोसणं असईपोसणयं ॥ १०१ ॥ १५ ॥

एतानि पञ्चदश कर्मादानानि षड्विधजीवघातादिमहासावद्यहेतुत्वात् वर्जनीयानि । प्रदर्शनं चैतद्बहुसावद्यानां कर्मणामेवञ्जातीयानां न पुनः परिगणनमिति गाथाद्वयार्थः ॥ २२–२३ ॥ उक्तं द्वितीयगुणव्रतातिचारप्रतिक्रमणम् । साम्प्रतं तृतीयगुणव्रतानर्थदण्डातिचारप्रतिक्रमणाय गाथामाह—

सत्थऽग्गि मुसल जतग–तणकट्ठे मंतमूलभेसज्जे । दिन्ने दवाविए वा, पडिक्कमे देसियं सव्वं ॥ २४ ॥

व्या०–इहानर्थदण्डविरमणाख्य तृतीय गुणव्रतम् । तत्र अर्थः–प्रयोजन धर्मेन्द्रियस्वजनादि तदभावोऽनर्थः, दण्ड्यते आत्मा येन स दण्डः पापबन्धादिरूपः । इहलोकमप्यङ्गीकृत्य निष्प्रयोजनभूतोपमर्दनिग्रहविग्रहविषयः । अनर्थेन–प्रयोजनाभावरूपेण धर्मार्थकामव्यतिरेकेण निजजीवस्य दण्डः अनर्थदण्डः । स चतुर्विधः, तद्यथा–अपध्यानाचरितः प्रमादाचरितः हिंस्रप्रदानं पापकर्मोपदेशः । तत्र 'अपध्यान' आर्तरौद्ररूपं तेनाचरितः–आसेवितो योऽनर्थदण्डः स तथा यथा–

कइया वच्चइ सत्थो, किं भंडं कत्थ केत्तियं भूमिं । को कयविक्कयकालो, निविसइ किं कहिं केण ॥ १०२ ॥

इत्यादि निष्प्रयोजनाऽसमञ्जसचिन्तारूपः । एवं प्रमादाचरितमपि । तत्र प्रमादः–मद्य-विषय-कषाय-निद्रा विकथालक्षणः, तेन आचरितं–अनुष्ठितं प्रमादाचरितम् । अथवा आलस्योपहतचेष्टितं प्रमादाचरितमुच्यते तच्च बहुजीवोपघातहेतुभूतमस्थगितघृत-तैलभाजनधारणादि । हिंसनशील हिंस्रं-हिंसाकारिशस्त्रानल-हलोदूखल-विषादि, तस्य प्रदानं अन्यस्मै समर्पणं हिंस्रप्रदानम् । पापहेतुत्वात् पापं कर्म कृष्यादिक्रियारूपं तस्योपदेशः पापकर्मोपदेशः, यथा—

दमयत वृषवृन्दं वाजिवृन्दारकाणां, कुरुत वृषणलोपं षढ्ढरे दत्तवह्निम् ।
कृतफुरनमशेषं शत्रुनाशं कुरुध्वं, दिशति कुशलकामः को हि पापोपदेशम् ॥ १०३ ॥

"इति चतुर्विधोऽनर्थदण्डः । तद्विरतावङ्गीकृतायां शेषभेदोपलक्षणतया हिंस्रदानभेदमेवाश्रित्य सूत्रकारः प्रतिक्रमणमाह–"सत्थऽग्गि" इत्यादिगाथया । व्या० शस्त्रं–क्षुरिका-खड्गादि, अग्निः–ज्वलनः, मुशल–मुद्गशाल्यादिकण्डनाय

काष्ठविशेषः, यन्त्रकं-यन्त्रीघरट्टादि, तृणं-दर्भांकुशादि व्रणकृमिशोधनं वा शोधनिका वा बोहारिका ! काष्ठं-पीठ-फलका-ऽरघट्ट-यष्ट्यादि, मन्त्रः-विषस्तम्भनादि, स च धारणारूपः प्रमार्जनारूपो वा, मूलं-नागदमनीप्रभृतिः ज्वराद्य-पनयनहेतुमूलिका वा, मूलं वा मूलकर्म गर्भशातनादि, भेषजं सांयोगिकं द्रव्यमुच्चाटनादिहेतु । एतत्कृशस्त्राग्न्यादि निष्प्रयोजनमन्येभ्यो दत्तं दापितं वा विसृष्टं च यदि एतस्माद्धि प्रचुरषड्जीवनिकायवधः, लाभः स्तोकोऽपि नास्ति शस्त्राग्न्यादिदाने दापने वा अतोऽनर्थाय दण्डोऽयम्, अनस्मिन् योऽतिचारस्तं दैवसिकादि सर्वं प्रतिक्रमामीति गाथार्थः ॥ २४ ॥ सम्प्रति प्रमादाचरितभेदे विशेषभूतपञ्चप्रकारविषयगोचरं प्रतिक्रमणमाह—

न्हाणुव्वट्टण वन्नग, विलेवणे सद्द रूव रस गंधे । वत्थाऽऽसण आभरणे, पडिक्कमे देसियं सव्वं ॥ २५ ॥

व्या०—अस्थि-त्वग्-मांस-रोम-सुखकृत्सम्बाधनया तैलाभ्यङ्गपूर्वकं शुद्धगन्धोष्णजलैः शरीरमलप्रक्षालनं स्नानम् । "तं अजयणाए करेंतो तसाउले ठाणे अछाणिएण य जलेण । उव्वट्टणं चिक्कसा(णा)ईहिं संमत्ताणुसाईहिं वा करेइ उव्व-णवट्टियाओ तहेव भरेइ न छारे छुहेइ दहावेइ वा तासु पिपीलियाओ लग्गंति ताओ संसत्तीयाओ चेव सुणगाईया खायंति पाएहिं वा दलिज्जंति । 'वन्नगो' कत्थूरियाईहिं कवोलाईण मंडण-तिलगाइनिमित्तमजयणाए करेइ । 'विलेवणं' कत्थूरिया-कुंकुम-चंदणाईयं गिम्ह-हेमंताउसु जहारितु अजयणाए करेइ जहा संपाइमा पडंति मरंति य । एएहिं चउहिं फासिंदियविसओ भणिओ । सद्दा—वेणु-वीणाईण सद्दं वा निमाए अजयणाए करेइ जहा पाउवेसिया विउज्झंति, ते य असंजया अहिगरणाइं पयट्टावेंति 'आउज्जोयण वणिए' इत्यादिगाथोक्तानि । अहिगरणं करित्ता णं अन्नेसिं अन्ना-

ऽणट्ठाए रूवं दसेइ पच्चक्खं कुव्वइ इति भणियं होइ रूवाणि वा पमयाईण। रसा-मिट्ठन्न-पाणाईण रसमणुभूय अन्नेसिं सद्दं उप्पायंतो चक्खेइ, ताहे ते वि य अहिगरणेसु तयत्थं पयट्टंति। गंधा-कप्पूरिगाऽगरुमाईण एएहिं सेसिंदियविसओ दंसिओ। तहा वत्थाणि-दुगुल्लाणि आसणाणि-आसंदी मसूरगाईणि आभरणानि-कडग-कुंडलाईणि। एएहिं फासिंदियगोयरो परिभोगविसओ दंसिओ। एएहिं कयपरिमाणाण वत्थाणुव्वट्टणाईणं सुहत्थिणा अइ(इ)रेगो पमायबाहुल्ला जो कओ तं देसियं सव्व पडिक्कमे इति गाथार्थः ॥ २६ ॥ अत्रापि पञ्चातिचारा वर्जनीयाः तानेवाह—

कंदप्पे कुक्कुइए, मोहरि अहिगरण भोगअइरित्ते। दंडम्मि अणट्ठाए, तइयम्मि गुणव्वए निंदे ॥ २६ ॥

व्या०—कन्दर्पः १ कौत्कुच्यं २ मौखर्यं ३ संयुक्ताधिकरणता ४ उपभोगपरिभोगातिरेकः ५ इति। तत्र 'कन्दर्पः' कामः तदुदीपको हास्यप्रधानस्तथाविधवाक्प्रयोगोऽपि तद्धेतुत्वात् कन्दर्पः, रागोद्रेकात् प्रहासमिश्रं मोहोद्दीपकं नर्मेति भावः। श्रावकेण हि सदैव परिमितमेवाऽनुल्बणं हास्यं विधेयम्, इतरथा लघुत्वापत्तिः। तथा च पठ्यते,—

पापरसिकरयमसज्जनसेवा, स्त्रीषु विवादमकारणहास्यम्। गर्दभयानमसंस्कृतवक्ता, षट्सु नरो लघुतामुपयाति ॥१०४॥

विशेषतः श्राव(वि)काकुलस्त्रीजनस्य। तथा च—

कपोलस्फुरितं हास्यं, सलज्जं मृदुभाषितम्। भवतीह कुलस्त्रीणां, निर्विकारं निरीक्षितम् ॥ १०५ ॥

"कुक्कुइए" त्ति परेषां हास्यजनकं भ्रूचक्षुर्नेत्रसङ्कोचादिविक्रियागर्भं भाण्डानामिव चेष्टितं कौत्कुच्यम्। एतौ कन्दर्प-कौत्कुच्याख्यावतिचारौ प्रमादाचरितस्य द्रष्टव्यौ तद्रूपत्वात् 'मोहरि'त्ति मुखमस्यास्तीति मुखरः-वाचालः तस्य कर्म

'मौखर्य' धार्ष्ट्यप्रायमसभ्याऽसम्बद्धप्रलापित्वम्, अयं च पापकर्मोपदेशव्रतस्यातिचारः, मौखर्ये सति पापकर्मोपदेशसम्भवात्। "अहिगरण" त्ति 'संजुयाहिगरणं' तत्राधिक्रियते नरकादिष्वात्माऽनेनेत्यधिकरणं-तूणीर-धनु-मुसलोदूखल-घरट्टादि संयुक्तम्-अर्थक्रियाकरणयोग्यं प्रगुणीकृतं तच्च तद् अधिकरणं च संयुक्ताधिकरणं तद्भावः संयुक्ताधिकरणता इह विवेकिना संयुक्तशकटाद्यधिकरणं न धरणीयम्, यतोऽसौ साक्षात्स्वयमपि हिंस्रं शकटादिकं न समर्पयति परेषां तथापि तेन संयुक्तेन ते याचित्वाऽप्यर्थक्रियां कुर्वन्ति विसंयुक्ते च तस्मिन् ते स्वत एव निवारिता भवन्ति प्रगुणं हि तद्दृष्ट्वाऽन्योऽपि याचत इति भावः, अयं हिंस्रप्रदानस्यातिचारः। "भोगअइरित्ते" त्ति उपभोगपरिभोगविषयभूतानि यानि द्रव्याणि स्नानप्रक्रमे उष्णोदकोद्वर्तनकामलकादीनि भोजनप्रक्रमेऽशनपानादीनि तेषु किल स्वोपयोगिभ्योऽधिकानि अर्थक्रियासिद्धावपि ताम्बूल-मोदक-मण्डकादीन्युपभोगाङ्गानि तडागादीषु स्वोपभोगाधिकानि न नेतव्यानि तेन ह्यात्मोपभोगातिरिक्तेन परेषां स्नान-भोजनादिभिरनर्थदण्डो भवति अयमपि विषयात्मकत्वात् प्रमादाचरितस्यातिचारः। अपध्यानव्रते त्वनाभोगादिना प्रवृत्तिरतिचारः। आकुट्यानुप्रवृत्तौ भङ्ग एव। एवं कन्दर्पादिष्वपि यथासम्भवमाकुट्या प्रवृत्तिर्भङ्गरूपैव वाच्या। अत्र कन्दर्पाद्यतिचारविषयं श्लोकत्रयं पूर्वसूरयः प्राहुः—

कन्दर्पमत्र रतिकेलिविधिं वदन्ति, कौत्कुच्यमप्यतिविकारिशरीरचेष्टाम्।
वाचाटतां मुखरतां च वदंति तज्ज्ञास्तद्वर्जयेत्कृततता हि सतामभूमिः ॥ १०६ ॥
शकटोदूखल-चुल्ली-हल-गन्त्रीप्रभृति चोक्तमधिकरणम्। तत्संयोगोऽजस्रं, स्रवति महापापमिति वर्ज्यः ॥ १०७ ॥

सकलमुपस्करमधिकं, मतिमान् स्वगृहेऽपि कारयेन्नैव । साधाधिकोपकरणैर्लोकः पापं समाचरति ॥ १०७ ॥

"दंडम्मि अणट्ठाए" त्ति अनर्थदण्डाख्ये तृतीये गुणव्रते योऽतिचारस्तं "निंदे" त्ति मिथ्यादुष्कृतकरणेन शोधयामीति गाथार्थः ॥ २६ ॥ उक्तं गुणव्रतातिचारप्रतिक्रमणम् । साम्प्रतं शिक्षाव्रतातिचारप्रतिक्रमणमुच्यते—

शिक्षाव्रतानि च सामायिकादीनि चत्वारि तत्र सम—राग-द्वेषवियुक्तो यः सर्वभूतान्यात्मवत् पश्यति तस्य राग-द्वेषरहितस्य जीवस्याय—लाभः समायः । समो हि प्रतिक्षणमपूर्वैर्ज्ञान-दर्शन-चारित्रपर्यायैश्चिन्तामणि कल्पद्रुमादिप्रभावैर्निरुपमसुखहेतुभिर्युज्यते । समायः प्रयोजनमस्य क्रियानुष्ठानस्येति सामायिकं सावद्यपरित्याग-निरवद्यासेवनरूपो व्रतविशेषः, तदुक्तम्,—

सावज्जजोगवज्जण, निरवज्जस्सेह सेवण जं च । सव्वेसु य भूएसु, समयाभावो उ सामाइयं ॥ १०८ ॥

मण-वय-तणूहिं करणे, कारवणम्मि य सपावजोगाणं । जं खलु पच्चक्खाणं, तं सामइयं मुणेयव्वं ॥ १०९ ॥

"सपावजोगाणं" ति पापहेतुकव्यापाराणामित्यर्थः । इदं च व्रतं सर्वारम्भप्रवृत्तेन गृहिणा गृहवाससमुद्रान्तरनिरन्तरोच्छलद्दुच्छप्रचुरव्यापारवीचिवर्गव्याऽऽवर्तजनिताकुलत्वचित्तोद्वेगदक्ष अतिप्रचण्डमोहनरपतिबलतिरस्करणमहायोधकल्पं प्रतिदिवसमन्तरान्तरा यत्नेन कर्तव्यम्, यत उक्तम्—

सावज्जजोगपरिवज्जणट्ठा, सामाइयं केवलियं पसत्थं । गिहत्थधम्मा परम त्ति नच्चा, कुज्जा बुहो आयहियं परत्था ॥११०॥

सामाइयम्मि उ कए, समणो इव सावओ हवइ जम्हा । एएण कारणेणं, बहुसो सामाइयं कुज्जा ॥ १११ ॥

देशसामायिकं चेदम्, तेन नानुमत्या सावद्ययोगवर्जनम्। तच्च कालावधिनैव, स च यावन्नियमं पर्युपासे इति मुहूर्तादिकः। यच्च सामायिकं प्रतिमारूपं उभयसन्ध्याग्राह्यं तस्य त्रैमासिकः कालः सुप्रसिद्धः। इदं च पञ्चातिचार-विशुद्धं पालनीयमिति तदतिचारपञ्चकप्रतिक्रमणायाह—

तिविहे दुप्पणिहाणे, अणवट्ठाणे तहा सइविहूणे। सामाइए वितहकए, पढमे सिक्खावए निंदे ॥२७॥

व्या०—'त्रिविधं' त्रिप्रकारं दुष्टं प्रणिधानं-प्रयोगो दुष्प्रणिधानं मनो-वाक्कायानां एते मनो-वाक्काया दुष्प्रणिधान-लक्षणास्त्रयोऽतिचाराः, सामायिकानवस्थितत्वं, स्मृत्यभावश्चेति द्वावित्ति सर्वे पञ्च। तत्र मनोदुष्प्रणिधानं कृतसामा-यिकस्य 'गृहेतिकर्तव्यतायां' सुकृत-दुष्कृतपरिचिन्तनमिति भावः। तथा च—

विधाय सामायिकमार्त्ततत्परः, स्ववेश्मचिन्तामिह यो न मुञ्चति।
निरर्थकस्तस्य तदर्थमुद्यमो, ह्यविद्धलक्षस्य धनुष्मतो यथा ॥ ११२ ॥

वाग्दुष्प्रणिधानं कृतसामायिकस्य 'रे काण! षण्ढ!' आदिको निष्ठुरसावद्यवाक्प्रयोगो वाचाऽसमञ्जसभाषणम्, कायदुष्प्रणिधानं कृतसामायिकस्याप्रत्युप्रेक्षितादिभूतलादौ स्थानादिकरणं कर-चरणादीनां देहावयवानामनियन्त्रित-स्थापनम्। "अणवट्ठाणे" त्ति न अवस्थानं अनवस्थानं अनवस्थितस्याल्पकालीनस्य अनियतस्य वा सामायिकस्य करणं 'अनवस्थितकरणम्' अल्पकालकरणं करणानन्तरमेव किञ्चिदालम्बनमासाद्य पारयति त्यजति, यथा कथञ्चि-द्वाऽनादृतस्तत् करोति। "तहा सइविहूणे" त्ति स्मृत्यकरणं सामायिकस्मृतेरनासेवनम्। सामायिकं चतुर्मासकावधि

यथालक्षणं विधेयमिति न स्मरामीत्येवमस्मरणं न स्यात् किन्तु सामायिकसंबं(बं)धिनी या स्मृतिः–अस्यां वेलायां
मया सामायिकं कर्तव्यम्, तथा कृतं तत् न वा इत्येवरूपं स्मरणमत्र तस्याः प्रबलप्रमादतयाऽकरणं स्मृत्यकरणं
"स्मृतिमूलं च मोक्षानुष्ठानम्" इति । इह चाद्यत्रयस्यानाभोगादिनाऽतिचारत्वम्, इतरद्वयस्य तु प्रमादबहुलतयेति,
ननु मनोदुष्प्रणिधानादिषु सामायिकस्य निरर्थकादिभणनेन परमार्थतोऽभाव एव कथितः, अतिचारश्च मालिन्यस्वरूपो
भवति ततः सामायिकाभावे कथमतिचारत्व? ततोऽमी भङ्गा एव नातिचाराः, सत्यम्, अनाभोगत इति समाधान-
मुक्तम् । ननु द्विविधं त्रिविधेन सावद्यप्रत्याख्यानं सामायिकं तत्र च मनोदुष्प्रणिधानादिषु प्रत्याख्यानभङ्गात् सामा-
यिकस्याभाव एव । प्रत्याख्यानभङ्गजनितं प्रायश्चित्तं च भवेत् मनोदुष्प्रणिधानं च दुष्परिहारं मनसोऽनवस्थितत्वात्
अतः सामायिकप्रतिपत्तेः सकाशात् तदप्रतिपत्तिः सुन्दरा । नैवम्, यतः सामायिकं द्विविधं त्रिविधेन प्रतिपन्नं
तत्र च मनसा न करोमीत्येवमादीनि षट् प्रत्याख्यानानि अत एकतरप्रत्याख्यानभङ्गेऽपि शेषप्रत्याख्यानसद्भावात्
सामायिकस्य सर्वथाऽभावः मिथ्यादुष्कृतेन मनोदुष्प्रणिधानमात्रस्य शुद्धयभ्युपगमाच्च सर्वविरतिसामायिकेऽपि मि-
थ्यादुष्कृतेन मनोदुष्प्रणिधानमात्रस्य शुद्धयभ्युपगमात् । यदुक्तम्–"गुत्तिभंगे मिच्छादुक्कडं पायच्छित्तम्" इति । यच्च
केनचिदुच्यते "अविधिकृतादवरमकृतम्" इति तदप्यसूयावचनमात्रं यस्मादविधिकृते लघु प्रायश्चित्तमुक्तं अनुष्ठेय-
स्याकरणे तु तद् गुरुकमिति, अतो व्यवहारनयमतेनातिचारमात्रेऽपि तत् क्रियमाणं युक्तम् । "सामाइए वितहकए"
सामायिके भवाः सामायिका 'पञ्चमादित्वाद् भा(भ)वार्थेऽण्' तान् सामायिकानतिचारानिति गम्यम् । किम्भूतान्?

इत्याह 'वितथकृतान्' अनुचितत्वविहितान् स्वार्थप्रसाधकत्वाद् आजलाजकल्पान्(?) प्रथमे सामायिकाख्ये शिक्षाव्रते "निंदे" त्ति मिथ्यादुष्कृतं प्रयच्छामीति। सामायिकस्थश्च—

विगहाईएसु रहिओ, सज्झायपरो तया जईतुल्लो। इच्छियकालं चिट्ठइ, पारेउं कुणइ वावारं ॥ ११३ ॥

अत्र कश्चिद् ब्रूते-कियानिष्सितकालः? हन्त उक्तं यावन्नियमं पर्युपासे इति नियमश्च जघन्यतोऽपि द्विघटिकामानः काल उत्कृष्टतोऽहोरात्रमानो नियमः। अतः 'सामायिके जघन्यतोऽपि घटिकाद्वयं स्थातव्यम्' अन्यथाऽतिचारः। जघन्यतो द्विघटिकः कुतो लभ्यते? इति चेद्, उच्यते परिणामवशाद् हि सामायिकमसौ करोति परिणामस्तूत्पन्नो गुणस्थानकमारोहति नच जघन्यतोऽप्यन्तर्मुहूर्तमिति घटिकाद्वयमानः कालः पालनीयः। केचिदाहुः—यद्युत्सुको भवेत् तदा सङ्केतकं कुर्यात् यावत् साधून् पौषधशालां ग्रन्थिं वा पर्युपासे तावत् सामायिकं करोमि एतदप्याचर्यमाणं दृश्यते इत्यलं प्रसङ्गेनेति गाथार्थः ॥ २७ ॥ अथ देशावकाशिकव्रतातिचारप्रतिक्रमणायाह—

आणवणे पेसवणे, सद्दे रूवे य पोग्गलक्खेवे। देसावगासियम्मी, बीए सिक्खावए निंदे ॥ २८ ॥

व्या०–तत्र दिग्व्रते गृहीतस्य योजनशतादिसविस्तरदिक्प्रमाणस्य देशो–सङ्क्षिप्तविभागेऽवकाशः–अवस्थानं देशावकाशः तेन निवृत्तं देशावकाशिकं। पूर्वं दिक्प्रमाणं योजनशतादिना यावज्जीवकं प्रभूतं कृतमासीत् तस्य योजनादिके देशनियमः क्रियते एतावदेव गन्तव्यं न परत इत्येवंरूपं तदिदं बहुतरदिक्परिमाणसङ्कोचरूपमिति भावः, सर्वव्रतसङ्क्षेपरूपं वा। यदुक्तम्—

एगमुहुत्तं दिवस, राई पंचाहमेव पक्खं वा । वयमिह धारेउ दढ, जावइय उच्छहे कालं ॥ ११४ ॥

अनया सर्वव्रतेष्वपि यानि प्रमाणानि विस्तितानि तानि पुनः पुनः दिवसतः प्रतिप्रहर प्रतिघटिक सङ्कोचयति, दैवसिकादपि रात्रौ सङ्कोचयतीत्युक्त भवति । अत्रार्षं गाथा—

देसावगासियं पुण, दिसिपरिमाणस्स निच्च संखेवो । अहवा सव्ववयाणं, संखेवो पइदिणं जो उ ॥ ११५ ॥

दिग्व्रतसङ्क्षेपं प्रतीत्यामी पञ्चातिचारा वर्जनीयाः, तत्र "आणवणे" त्ति आनयनप्रयोगः १ प्रेष्यप्रयोगः २ शब्दानुपातः ३ रूपानुपातः ४ बहिःपुद्गलप्रक्षेपः ५ इति । इदमत्र तात्पर्यम्—साधुश्रावको नियतदेशे वर्तमानः कृतसङ्क्षिप्ततरदिक्परिमाणो यदा स्वयं व्रतभङ्गभयादगच्छन् योऽन्यः सचित्ताचित्तादिद्रव्यानयने प्रयुज्यते स्वात्मप्रयोगेन प्रस्थितो वा सन्देशकप्रदानादिना त्वयेदमानेयम् इत्यानयनप्रयोगः । तथा प्रेष्यस्य—आदेश्यस्य केनापि प्रयोजनेन विवक्षितक्षेत्राद्बहिः प्रस्थापनरूपं प्रयोगं—व्यापारं करोति, यथा—अभिगृहीतप्रविचारदेशव्यतिक्रमभयात् त्वयाऽवश्यमेव गत्वा मम गवाद्यानेयम् इदं च तत्र कर्तव्यं इत्येवंभूतः प्रेष्यप्रयोगः । "सद्दे" त्ति स्वगृहवृति-प्राकाराद्यवच्छिन्नभूदेशाभिग्रहे बहिः प्रयोजनोत्पत्तौ तत्र स्वयं गमनायोगात् वृति-प्राकारादिप्रत्यासन्नवर्तिनो बुद्धिपूर्वकं क्षुत्कासितादिशब्दकरणेन समवसतिकान् बोधयतः शब्दानुपातः, शब्दस्यानुपातनम् उच्चारणं तादृग् येन परकीयश्रवणविवरमनुपतत्यसौ, एवं क्षुत् कासितं वा सङ्केतनिमित्तं कुरुते । "रूवे" त्ति अभिगृहीतदेशाद्बहिः प्रयोजनभावे शब्दमनुच्चारयन्नेव परेषां स्वसमीपानयनार्थं रूपस्य—निजाकारस्यानुपातनं—स्वशरीररूपदर्शनं रूपानुपातः । "पोग्गलक्खेवे" त्ति

अभिगृहीतदेशाद्बहिः प्रयोजनसद्भावे परेषां प्रबोधनाय बहिः पुद्गलस्य–लेष्ट्वादेः प्रक्षेपः पुद्गल(प्र)क्षेपः। एतान् कुर्वन् देशावकाशिकव्रतमतिचरति। इ हि मा भूद् गमनागमने जीवघातादिसमारम्भ इत्यभिप्रायेण क्रियते, स च स्वयं कृतोऽन्येन वा कारित इति न कश्चित् तत्त्वतो विशेषः प्रत्युत स्वयं गमने गुणः, ईर्यापथादिविशुद्धेः, परस्य तु अनिपुणत्वात् कुतस्तच्छुद्धिरिति। इदं तावद्दिक्परिमाणस्यैव सङ्क्षेपकरणं दर्शितं तच्चोपलक्षणमात्रम्, शेषाणामपि स्थूलप्राणातिपातादिव्रतानां सङ्क्षेपोऽत्रैव द्रष्टव्यः, अन्यथा तत्सङ्क्षेपस्यापि दिनमासादिष्ववश्यं कर्तव्यत्वाद् व्रताधिक्यप्रसेद्धा-दशव्रतसङ्ख्या विशीर्येत। इह चाद्यद्वयस्यानाभोगादिनाऽतिचारत्वं इतरस्य तु त्रयस्य व्याजपरस्य व्रतसापेक्षत्वाद-तिचारता। इत्येवं द्वितीये देशावकाशिके शिक्षाव्रतेऽतिचारान् निन्दे मिथ्यादुष्कृतकरणेन शोधयामीति गाथार्थः।२८।

अथ पौषधोपवासव्रतातिचारप्रतिक्रमणस्यावसरः, तत्र पोषं–पुष्टिं प्रकमाद्धर्मस्य धत्ते–करोतीति पोषधः–अष्टमी-चतुर्दशी पौर्णिमास्यमावास्यापर्वदिनानुष्ठेयो व्रतविशेषः, पौषधि(धे) उपवासो–व्रतविशेषः पौषधोपवासः। स चाहा-रशरीरसत्कार-ब्रह्मचर्या-ऽव्यापारभेदाच्चतुर्विधः, पुनरपि प्रत्येकं द्विधा—देशतः सर्वतश्च अस्मिन्नङ्गीकृते आहारशरी-र-सत्कारयोर्देशतः सर्वतो वा परिहारः कर्तव्यः, ब्रह्मचर्या-ऽव्यापारयोस्तु देशतः सर्वतो वा सेवनं विधेयम्। तत्राहारः प्रतीतोऽशनादिस्तद्विषयस्तन्निमित्तो वा पोषधो (व्रतविशेष आहारपोषधः) आहारादिनिवृत्तिनिमित्तं धर्मपूरणं पर्व। एवं शरीरसत्कारपोषधोऽपि। ब्रह्मकुला(चर्या)नुष्ठानं, यथोक्तम्—"ब्रह्म वेदो ब्रह्म तपो, ब्रह्म ज्ञानं च शाश्वतम्" ॥ चरणीयं चर्यं ब्रह्म च तपोरूपं तच्चर्यं ब्रह्मचर्यं, तद्विषयः पोषधः तत्सेवनरूपो नियमो ब्रह्मचर्यपोषधः। तथा–

व्यापारपोषधोऽपि व्यापारवर्जनरूपः । अत्र पोषधगाथा —

पोसहमट्ठमिमाई, पव्वदिण तत्थ जो उ उपवासो । सो पोसहोववासो, भन्नइ चउहा य सो होइ ॥ ११६ ॥
आहार-देहसक्कार बंभ-वावारभेयओ सो य । देसे सव्वे य तहा, आहारे सव्वओ तत्थ ॥ ११७ ॥
सव्वाहारे नियमोऽहोरत्त देसओ तिगारे । आयंबिल निविगइय, एक्कासणमाइयं वा वि ॥ ११८ ॥
सव्वम्मि देहसक्कारपोसहो सव्वदेहभूसाए । नियमो न्हाण-विलेवण-सिरकेससठवणपभिईण ॥ ११९ ॥
देसे सिणाणमाईणमन्नतरगाण वज्जण भणो । बंभम्मि सव्वओ पुण, बंभचेरं ज अहोरत्त ॥ १२० ॥
देसम्मि दिवसयंबं, वावारे सव्वओ अहोरत्त । सावज्जारंभाणं, नियमो सामाइयम्मि जहा ॥ १२१ ॥
देसम्मि करिसणाई, अन्नतरकम्मवज्जण चेव । पंचाइयाररहिय, मइमं पालेइ एय पि ॥ १२२ ॥

तत्थ जो देसे पोसहं करेइ सो सामाइयं करेइ वा न वा । जो सव्वहा अव्वावारपोसहं करेइ सो नियमा कय-सामाइओ, जइ न करेइ तो नियमा वंचिज्जइ । तं कहिं? चेइयघरे वा साहुमूले वा घरे वा पोसहसालाए वा उम्मुक्कमणि-सुवण्णो पढतो पुत्थयं वा वायतो धम्मज्झाणं ज्झायइ, जहा— 'एए साहुगुणे अहं न समत्थो मंदभग्गो धरेउं' विभासा । सेसा पोसहविहिसामायारी तप्पगरणाओ नेया । नवरं, राईए पोसहियस्स किंचि विसेससरूवं पदरिसिज्जइ- एत्थ पोसहिओ जया सथारए निसीयइ तया सामाइयदंडयमुच्चारेइ, "जइ मे होज्ज पमाओ" इच्चाइणा सागारम-

णसणं काउं आउंटियपाओ सुयइ। सो पोसहिओ रयणीए संथारसुत्तो वि जाव निद्दा न एइ ताव एवं जीवमणुसासइ, जहा—

ते धन्ना कयउन्ना, सुलद्धए जम्मजीविए तेसिं। जे साहुणो सया वि हु, सेवंति नियं विहिमखंडं ॥ १२३ ॥
ते धन्ना समणोवासया वि जे दूरचत्तविसयरसा। आणंदाइ व बहवे, पडिमासंभावियप्पाणा ॥ १२४ ॥
धन्नो सागरदत्तो, भीममसाणे ठियस्स पडिमाए। पडिवेरिएण दड्ढुं, कमलामेलाए संबंधे ॥ १२५ ॥
कयपुढविपालिबंधस्स खायरंगारपूरिए सीसे। मणगं पि न जस्स मणं, चलियं सज्झाणसेलाओ ॥ १२६ ॥
धन्नो सुदंसणो जो, न चाइओ चालिउं पइन्नाओ। दहिवाहणप्पियाए, अभयाए तियसगिरिधीरो ॥ १२७ ॥
अहिसरिया पाएहिं, सोणियगंधेण जस्स कीडीओ। खायंति उत्तमंगं, चिलाइपुत्तं तयं वंदे ॥ १२८ ॥
सो कह न वंदणिज्जो, गजसुकुमाल त्ति नेमिजिणसीसो। मत्थयनिहित्तजलणे, जेणं उप्पाडियं नाणं ॥ १२९ ॥

एमाइसुहभावणापरिगयमाणसो निद्दं कुज्जा, राईए चरमजामे सुत्तविबुद्धो धम्मजागरियं कुज्जा, जहा—

को हं का मम जाई, किम्व कुलं देवया व के गुरुणो। को मह धम्मो के वा, अभिग्गहा का अवत्था मे ॥१३०॥
जम्मजरामरणजलो, अणाय(इ)मं वसणसावयाइन्नो। जीवाण दुक्खहेऊ, कट्ठं रुद्दो भवसमुद्दो ॥ १३१ ॥
कालम्मि अणाईए, जीवाण विचित्तकम्मवसगाण। तं नत्थि संविहाणं, संभवई जं न भमिराणं ॥ १३२ ॥
चुलसीइजोणिलक्खेसु पेगकुलकोडिलक्खगहणेसु। भमिरेणं इह चिय संपयाओ णंताउ पत्ताओ ॥ १३३ ॥

पीमाइपइराई, सयंपा वायहारिय जिणंहिं । सव्वे सव्वेहिँ सया, अणंतखुत्तो इहं पत्ता ॥ १३४ ॥ तहेह—
रागोरगगरलभरो, तरलइ चित्तं तवेइ दोसग्गी । कुणइ अणुचियपविर्त्ति, महामईण पि हा मोहो ॥ १३५ ॥
पुरिसेण सुरपुव्वं, नारिं दट्ठूण अनुयत्तसुरो (?) । तक्खणसेवी जायइ, इह तर्हिँ चेव नरयीए ॥ १३६ ॥
अयत्त धीसेयागेँ हारग्ग वीरिय मलं सुद्धी । पावइ सोस तह दोमणस्समह पि दुहनिवहं ॥ १३७ ॥ किं बहुणा?
पायमिह जीवा अन्नाणंधा मिच्छत्तमोहिया कुग्गहग्गहगहिया मग्गं न नियंति, न सद्दहंति, चिट्ठंति न य उचियं ।
ता कइया तं सुदिणं, सा सुतिही तं भवे सुनक्खत्तं । जत्थ सुगुरुपरतंतो, चरणभरधुरं धरिस्समहं ॥ १३८ ॥
एवमाइ धम्मजागरियं करेइ । पडिक्कमणसमए आवस्सयं तहा कुज्जा, जहा पडिलेहणाए विहियाए सूरो उवेइ ।
इय भावओ कुणंतेण सुसाओ अत्थओ करणओ य । पोसहवयमाणाए, फासियमाराहियं च भवे ॥ १३९ ॥
अयं च पञ्चातिचारविशुद्धः सम्यक् पालनीयः, अतस्तदतिचारपञ्चकप्रतिक्रमणायाह—

संथारुच्चारविही, पमाय तह चेव भोयणाभोए । पोसहविहिविवरीए, तईए सिक्खावए निंदे ॥ २९ ॥

इहातिचारपञ्चक प्रकृतसूत्रगाथायां सूचितमस्ति । तत्र गाथापूर्वार्धे चत्वार उक्ताः तृतीयपादेन पञ्चमः ।
गाथाक्षरार्थस्त्वयम्—संथारा उवगरणस्स पोसहिओवगारिस्स उच्चारपासवणाइभूमीणं च विही—सुप्पडिलेहियसुपम-
ज्जियाइकरणं । तत्थ पढमं दिट्ठीए अवलोयणं पडिलेहणा पच्छा उवग्गहियरओहरणवत्थंचलाइणा पमज्जणा जहोचिय-
संथारुच्चाराईण सुचारुविहिणा, स च—"इगदिट्ठि छप्पुरिमा नवखोडपक्खोडवत्थपडिलेहा" ॥

तेसु संथारुच्चारविहिसु पमाओ अपडिलेहियअपमज्जियकरणं, एत्थ चउभंगो—न पडिलेहेइ न पमज्जइ १, पडिलेहेइ न पमज्जइ २, न पडिलेहेइ पमज्जइ ३, पडिलेहेइ पमज्जइ चउत्थो ४। जं तं पडिलेहेइ पमज्जइ, तत्थ तिन्नि भंगा—दुप्पडिलेहियं दुप्पमज्जियं १ दुप्पडिलेहियं सुप्पमज्जियं २ सुप्पडिलेहियं सुप्पमज्जियं करेइ ३। अतः प्रोच्यते तथा चैव भवत्यनाभोगे सति अनुपयुक्ततायां सत्यां पौषधिकस्य संस्तारकोच्चारविषये अपडिलेहियदुपडिलेहियसेज्जासंथारए १ अपमज्जियदुपमज्जियसेज्जासंथारए २ अपडिलेहियदुपडिलेहियउच्चारपासवणभूमी ३ अपमज्जियदुपमज्जियउच्चारपासवणभूमी ४ इत्यतिचारचतुष्टयमिति। पञ्चमश्च पौषधविधिर्विपरीतः स्यात्। तथा च—"पोसहोववासस्स सम्मं अणुपालणया" इत्यत्र पञ्चम उक्तः। तत्थ पोसहस्स विही–आहार-देहसक्काराईण चउण्हं भंगाणं जहायोगं पालणं तस्य विपरीतता–अन्यथाकरणं, यथा—आहारपोसहवयं काऊण छुहातिसाए अभिभूओ चिंतइ, सज्जो तं तं आहारं पाचयिस्सामि।

आहारगोयरं तह, कुव्वं विगहं पमोयमुव्वहइ। अइयरइ पोसहवयं, नन्दे इव (स्स इव) लहइ भंसं पि ॥ १४० ॥

श्रेष्ठी नन्दो हि पोषधस्थोऽष्टमभक्तिकस्तृडार्तो रजन्यां बभूव। ततो महाकष्टेन रजनी विभाता। तदूर्ध्वं राजानं विज्ञप्य जलाशयं कारितवानिति। शरीरसत्कारविपरीतता जहा—

पस्सेयमलेहिँ तणू, अज्जं उव्वेविया दढकिलंता। ण्हाइस्सामी कल्लं, सहंति मुणिणो वि कह णु मलं।१४१। बंभचेरे वि—काऊण पोसहं तह, वाहिज्जइ वेयमोहणिज्जेण। सरइ तह पुव्वकीलियहसियाई इंदियत्थे य ॥१४२॥ अव्वावारे वि—

कयमेयं न कप्प मे, लहणिज्जमिमं इमं च दिज्ज मे । इच्चाइपोसहगओ, चिंततो मलिणइ वय तु ॥ १४३ ॥

एष पञ्चमोऽतिचारः । एतान् पञ्चातिचारान् पोषधाख्ये तृतीये शिक्षाव्रते "निंदे" त्ति मिथ्यादुष्कृतं प्रयच्छामीति । केचिदेवं व्याचक्षते—"प्रमादात् संस्तारविधिं अप्रत्युपेक्षितदुष्प्रत्युपेक्षिताऽप्रमार्जितदुष्प्रमार्जितलक्षणं निन्दामीति योगः । तथा, प्रमादात् प्रागुक्ताऽप्रत्युपेक्षितादिभेदं उच्चारविधिं च निन्दामीति चत्वारः" । पञ्चमातिचारं च "भोयणाभोए" त्ति पाठं मन्यमाना एवं व्याख्यान्ति—भोजने—आहारे आभोगः—उपयोगतत्परता भोजनाभोगः । कदा भोजनसमयः पूर्णो भविष्यति? येनाहं भोक्ष्ये । अतः प्रमादाच्चरितानेतानतिचारान् पोषधव्रतविधिविपरितान् निन्दार्हान् निन्दे इति गाथार्थः ॥ २९ ॥ पौषधिकेनावश्यं अतिथेः प्राप्तौ सत्यां संविभागप्रदानपूर्वकं भोक्तव्यम्, अन्यदा त्वनियमः । अत्र मातृस्थानत इव कुर्वाणस्यातिचारा पञ्च भवन्ति । तत्प्रतिक्रमणायाह—

सच्चित्ते निक्खिवणे, पिहणे ववएस मच्छरे चेव । कालाइक्कमदाणे, चउत्थे सिक्खावए निंदे ॥ ३० ॥

व्या०—इहातिथिसंविभागाख्यं चतुर्थं शिक्षाव्रतं स्यात् । तत्र तिथिपर्वादिलौकिकव्यवहारत्यागाद्भोजनकालोपस्थायी श्रावकस्यातिथिः साधुरुच्यते । तदुक्तम्—

तिथिपर्वोत्सवाः सर्वे, त्यक्ता येन महात्मना । अतिथिं तं विजानीयाच्छेषमभ्यागतं विदुः ॥ १४४ ॥

तस्यातिथेः सद्व्रतो निर्दोषो न्यायागतानां कल्पनीयाना वस्तूनां [विशिष्टो] श्रद्धासत्कारादिक्रमयुक्तः पश्चात्कर्मपरिहार्थं भागः—अंशः अतिथिसंविभागः । अस्य पञ्चातिचारा अमी—सचित्तनिक्षेपः, सचित्तपिधानं परव्यपदेशः, मत्सरिकता,

कालातिक्रम इति। तत्र सचित्ते पृथिव्यादौ साधुदेयस्यान्नादेर्वस्तुनो निक्षेपः–स्थापनम्, अदानबुद्ध्या मातृस्थानतः सचित्तनिक्षेपः। तस्यैवान्नादेः सचित्तेन कुष्माण्डफलादिना पिधानं–स्थगनं सचित्तपिधानम्। "ववएस" त्ति भीमन्यायेन परव्यपदेशः। साधुभिरुपलब्धे भक्तादौ चिन्तयति यद्येतन्न दास्यते ततो मदुपरि एषामवज्ञा स्यादतो लोकमध्ये हीला ततो वक्ति नागतास्तेऽद्यापि येषामिदं भोजनमुपस्कृतम्, यद्यागतास्ते स्युर्मां कदाचिदस्माभिरपि प्रेरिता भगवद्भ्यो दद्युरिति। यद्वा परस्य आत्मव्यतिरिक्तस्य व्यपदेशः स्वकीयेऽपि साधूचितवस्तुनि अदित्सयैव परसत्कमिदं न मदीयमिति याचितो वाऽभिधत्ते विद्यमाने एवामुकस्येदमस्ति तत्र गत्वा मार्गयत यूयमिति साधुसमक्षं भणतः परव्यपदेशः। मत्सरः असहनं साधुभिर्याचितस्य कोपनम्, यद्वा स कश्चिद्रङ्कमात्रोऽपि ददाति किमहं तस्मादपि कृपणो हीनो वा किं तेन वित्तेन? येन सतापि न्यूनता प्राप्यते, अतोऽहमपि ददामीत्येवं परोन्नतिवैमनस्यरूपोऽहङ्कारो दानप्रवर्तकविकल्पो मत्सरः सोऽस्तीति मत्सरिकः तद्भावो मत्सरिकता। कालस्य 'निर्धूमगं च गामम्' इत्याद्यभिहितस्य साधूचितभिक्षासमयस्यातिक्रमः–अदित्सयाऽनागतभोजनपश्चाद्भोजनादिद्वारेणोल्लङ्घनं कालातिक्रमः, तत्र दानं अयमभिप्रायः—कालमूनमधिकं च ज्ञात्वा साधवो न गृहीष्यन्ति ज्ञास्यन्ति च यथाऽयं ददाति अविकल्पतो दानार्थमभ्युत्थानमतिचार इति। एते चातिचारा एव न भङ्गाः दानार्थमभ्युत्थानाद्दानपरिणतेश्च दूषि(त)त्वात् भङ्गस्वरूपस्य चेहैवमभिधानात्, यथा—

दाणंतरायदोसा, न देइ दिज्जंतयं च वारेइ। दिन्ने वा परितप्पइ, किविणत्ताओ भवे भंगो ॥ १४५ ॥

ततो नेदं शङ्कनीयम् 'य एतेऽतिचारा उक्तास्ते भङ्गा एव' इति । इदं चेह तत्त्वम् याऽत्र व्रतविषयेऽनाभोगादिनाऽतिक्रमादिपदत्रयेण वा व्यमुद्धिकल्पनया वा व्रतापेक्षतया व्रतविषयं परिहरतः प्रवृत्ति(:)साऽतिचारः विपरीतायां तु भङ्गो भवति । तथा ये एते व्रतपञ्चातिचारास्ते उपलक्षणमतिचारान्तराणामवसेयाः न तु अवधारणम् । यदाहुः पूज्याः—

पंचपंचातिचाराओ, सुसम्मी ये पदंसिया । ते नावधारणट्ठाए, किंतु ते उवलक्खणं ॥ १५६ ॥

अथ सर्वविरतावेवातिचारा भवन्ति देशविरतौ तु भङ्गा एव यदाह—

सव्वे वि य अइयारा, संजलणाणं तु उदयओ हुंति । मूलच्छेज्जं पुण होइ, बारसण्हं कसायाणं ॥ १५७ ॥

अत्रोच्यते—इयं हि गाथा सर्वविरतावेवातिचारभङ्गोपदर्शनार्था न देशविरत्यादिभङ्गदर्शनार्था तथैव व्याख्यातत्वात् । अलं प्रसङ्गेन । एते प्रदर्शितरूपा अतिचारा मालिन्यहेतवश्चतुर्थशिक्षाव्रतेऽतिथिसंविभागाख्ये ये मम सञ्जातास्तान् "निंदे" त्ति मिथ्यादुष्कृतकरणेन शोधयामीति गाथार्थः ॥३०॥ साम्प्रतमतिथिसंविभागस्य न केवलमेत एव प्रदर्शितरूपा अतिचारा निन्दार्हाः, किन्त्वन्येऽपि सन्तीत्याह—

**सुहिएसु य दुहिएसु य, जा मे अस्संजएसु अणुकंपा । रागेण व दोसेण व, तं निंदे तं च गरिहामि ॥३१॥**

व्या०—साधुषु विशेष्यं द्रष्टव्यं साधूचितसंविभागव्रतप्रस्तावात्, साधुषु—अनुष्ठानरतेषु पुनः कीदृशेषु?—सुष्ठु हितं-ज्ञानादित्रयं येषां ते सुहिताः तेषु सुविहितेष्वित्यर्थः, दुःखितेषु—ग्लानीभूतेषु तपोनिष्ठसगात्रेषु वा प्रान्तोपधिषु समानाधिकरणतया विशेषणसूचको चकारौ । तथा "अस्संजएसु" त्ति न स्वयं—स्वच्छन्देन यताः—कृतोद्यमा अस्वयता-

स्तेष्वसंयतेषु–गुर्वाज्ञाविहरत्सु या मया कृता 'अनुकम्पा' कृपा, कारणे कार्योपचाराद् अनुकम्पाकार्यम्, अनुकम्पाऽत्र द्रव्यतोऽन्नादिदानरूपा, रागेण-मनाक् स्निग्धबुद्ध्या न तु गुणवत्त्वबुद्ध्या आत्मनि रागेण वा यथा 'अनाथस्वाम्यनाथकुटी चाहमि' ति, तथा द्वेषः–साधुनिन्दाख्योऽत्र यथा–'अदत्तादाना एते जल्लाविलमलिनदेहा(ः)क्षुधादिवेदनाग्रस्ता दुर्भगाः सर्वथैव पुत्रदारादिना परित्यक्ता निर्गतिकाः परगृहाण्यटन्तोऽन्तप्रान्तभोजिनो लुञ्चितशिरसोऽज्ञाः खल्वमी अत उपष्टम्भनीया' इत्येवं निन्दापूर्वकं च याऽनुकम्पा सापि निन्दा गर्हा अशुभदीर्घायुष्कर्मबन्धकारणत्वात् । यदाह—

तहारूपं समणं वा माहणं वा संजयविरयपडिहयपचक्खायपावकम्मं हीलित्ता निंदित्ता खिंसित्ता गरहित्ता भणिग्रपगारेण अवमन्नित्ता अमणुन्नेणमपीइकारगेणं च पडिलाभेत्ता अहे असुहदीहाउयत्ताए कम्मं पकरेइ ।

यद्वा सुखितेषु बाधाभावाद् दुःखितेषु–भावत्सु असंयतेषु–पार्श्वस्थेषु या "मे" मया अनुकम्पा उपष्टम्भरूपा रागेण तत्प्रीत्या द्वेषेण वा तत्सद्भूतदोषपरिज्ञानात् "दगपाणं पुप्फफलं" इत्यादिपरिज्ञानाद् रक्तेन वाऽरक्तेनापि या कृता तां निन्दे तां च गर्हे । यद्वेत्थं व्याख्यायते असंयता नाम षड्जीवनिकायवधप्रवृत्ता मिथ्यादृष्टयो द्विजजटिलचरकपरिव्राजकादयस्तेष्वनुकम्पा, अत्रानुकम्पाशब्देन भक्तिः सूचिता । तथा च—

आयरिय अणुकंपाए, गच्छो अणुकंपिओ महाभागो । गच्छाणुकंपणाए, अव्वोच्छित्ती कया तित्थे ॥ १४८ ॥

कीदृशेषु तेषु ? सुखितेषु दुःखितेषु च, सुखिनः–रोगाभावप्रणीतरसाहारभोक्तृत्वेनोपचितगलकपोलाः सम्पद्यमानमनईप्सिताच्छादननिकेतनाः, तदितरे काणान्धपङ्गुत्वग्दोषादिदोषान्विता दुःखिताः । ततो द्विविधेष्वप्यसंयतेषु

याऽनिर्दिष्टस्वरूपा मनोवाक्कायैः "मे" मया महाफलमतिथिदानमिति अनुकम्पा—भक्तिः कृता भोजनवस्त्रादि उपलक्षो-
प्रयदानादिना । कथम्? इत्याह—रागेण वा द्वेषेण वा, तत्र रागतः एष मम निजकः सुहृद्वा एकदेशग्रामसङ्गतो वा
तपस्वी ब्रह्मचारी वा कष्टानुष्ठानपरो वा इत्यादिना । ननु रागतस्तावद्भवत्येवम्, द्वेषतो दानस्यासम्भवात् कथं प्रति-
क्रमणसम्भवः । अत्रोच्यते, यथा हि कश्चित् केनापि परिभूतस्ततो पश्चात्सो दाता परिभवकारिणे द्वेषं धर्म(य)न् तत्प-
रिभूत्यर्थं विशेषतस्तस्मै दानं ददाति इत्येव तदा द्वेषेण दानसम्भवः । तदेवंविधं दानं रागद्वेषाभ्यां सहितं निन्दामि
गर्हामि च । यत् पुनरनुकम्पादानं यथा—

कृपणेऽनाथदरिद्रे, व्यसनप्राप्ते च रोगशोकहते । यद्दीयते कृपार्थमनुकम्पा तद्भवेद्दानम् ॥ १४९ ॥

उपचितदेहस्यापि प्रार्थनाकारिणो दरिद्रप्रायत्वादनुकम्पादानत्वादनुकम्पादानम्, न तत्र प्रतिक्रमणं निषेधाभावात् ।
तीर्थकृतां च सांवत्सरिकदाने ददतां व्रतग्रहणसमयेऽनपेक्षितपात्रापात्रविभागतयापि युक्तमेव, सत्पुरुषमार्ग इति
कृत्वेति गाथार्थ इति ॥ ३१ ॥ एवं चासौ श्रावकः कृतातिथिसंविभागो भोजनकालेऽर्हच्चैत्यानां पूजां विधाय वंदित्वा
च यतिवृत्ताशेषं भुङ्क्ते । यदुक्तम्—

अर्हद्भ्यः प्रथमं निवेद्य सकलं सत्साधुवर्गाय च, प्राप्ताय प्रविभागतः सुविधिना देयं यथाशक्तितः ।
देशायातसधर्मचारिभिरसौ सार्धं च काले स्वयं, भुञ्जीतेति सुभोजनं गृहवतः शुद्धं जिनैर्भाषितम् ॥ १५० ॥

एतदुल्लङ्घने त्वतिचारः । सविभागविषयप्रतिषिद्धकरणस्य प्रतिक्रमणमुक्त्वा तमेव संविभागं प्रतीत्या-

करणे प्रतिक्रमणमाह—

साहूसु संविभागो, न कओ तवचरणकरणजुत्तेसु । संते फासुयदाणे, तं निंदे तं च गरिहामि ॥ ३२ ॥

व्या०—ज्ञानादिभिः साधयन्ति मोक्षमार्गमिति साधवस्तेषु संविभजनं संविभागः प्रासुकैषणीयाहारदानरूपः स 'न कृतः' न विहितः, किम्भूतेषु तेषु ? तपश्चरणकरणयुक्तेषु, तत्र तप्यत इति तपः । तदुक्तम्—

रस-रुधिर-मांस-मेदोऽस्थि-मज्जा-शुक्राण्यनेन तप्यन्ते । कर्माणि चाशुभानीहेति तपो नाम नैरुक्तम् ॥ १५१ ॥

तच्च बाह्याभ्यन्तरभेदतो द्वादशविधम् । चर्यत इति चरणं व्रतादि । यदुक्तम्—

वय समणधम्म संयम, वेयावच्चं च बंभगुत्तीओ । नाणाइतिगं तव कोहनिग्गहो चरणमेयं तु ॥ १५२ ॥

क्रियत इति करणं पिण्डविशुद्ध्यादि । यदुक्तम्—

पिंडविसोही समिई भावण पडिमा य इन्दिय निरोहो । पडिलेहण गुत्तीओ, अभिग्गहा चेव करणं तु ॥ १५२ ॥

एतेन मूलोत्तरगुणाः कथिताः । तैर्युक्तेषु यावज्जीवं कृताभिग्रहेषु । ननु चरणभणने तपसस्तद्भेदत्वेन गतत्वात्, किं पृथगुपादानेन ? उच्यते । निकाचितकर्मणामपि तपसा क्षपणात्, तपसः प्राधान्यख्यापनार्थं तपोग्रहणम् । यदुक्तम्—

सव्वासिं पयडीणं, परिणामवसादुवक्कमो भणिओ । पायमनिकाईयाणं, तवसा उ निकाईयाणं पि ॥ १५३ ॥

अनेन पात्रशक्तिरुक्ता । "संते" त्ति सति विद्यमाने "फासुयदाणे" त्ति प्रगता असवो यस्मात् तत् प्रासुकं निर्जीवमित्यर्थः । एषणीयपर्यायोऽप्ययं एषणीयस्योपलक्षणं वा । देय-दानयोरभेदोपचारात् प्रासुकैषणीयदानेऽन्न-

पानादौ साधुभ्य स्वगृहमसंकृ(न)विभागे दत्तेऽपि प्रहेणकागतमपि यत्र भूयोऽपि साधुभ्यो निवेदितं तदपि न कल्पते गृहिणो भोक्तुम् । यदि च स्वभोगाङ्गोपभृतमप्यवहृतमित्यन्यत् संस्कृत्य साध्वर्थं प्रयच्छति तदप्ययुक्तम् एतदपि यदि कृतमज्ञानादिस्मृत च, सत्यप्येव साधुसंविभागे आगमेऽस्य निषेधात् अशुभदीर्घायु कर्मबन्धस्तदपेति । सति प्रासुकदाने विभिन्नमविज्ञात प्रयच्छतो योऽतिचारस्तस्य प्रतिक्रमणार्हत्वात् प्रतिक्रमणमाह तं निन्दामि तच गर्हामि । "सते फासुयदाणे" इत्यनेन चित्तशुद्धिरभिहिता । अयमत्र भावार्थः,

संते फासुयदव्वे, सते परे तयाइगुणजुत्ते । न कओ अतिहिविभागो, तन्निंदे तं च गरहामि ॥ १९४ ॥

गाथार्थः ॥ ३२ ॥ कृतबादशव्रतातिचारप्रतिक्रमणः श्रावकः सम्प्रति संलेखनातिचारप्रतिक्रमणं परित्यज्य तदतिचारपञ्चकमुपदिश्य तद्भयने प्रार्थनामाह—

इहलोए परलोए, जीविय मरणे य आसंसपओगे । पंचविहो अइयारो, मा मज्झ हुज्ज मरणंते ॥३३॥

व्या०—इह "आसंसपओगे" त्ति प्रत्येकमभिसम्बन्धनीयं आर्षत्वकवचनात्, यथा—इहलोगासंसप्पओगे परलोगासंसप्पओगे जीवियासंसप्पओगे मरणासंसप्पओगे कामभोगासंसप्पओगे त्ति। तत्र प्रतिक्रामकं प्रतीत्य इहलोक मनुष्यलोकस्तस्मिन् आशंसा—अभिलाष तस्याः प्रयोगः—व्यापारः इहलोकाशंसाप्रयोग श्रेष्ठी स्यां जन्मान्तरे अमात्यो वा इत्येवममात्यादिऋद्धिप्रार्थना १ । परलोक—देवभवादिस्तस्याशंसाप्रयोगो यथा देवोऽहं स्यामित्यादि । जीवितं—प्राणधारणं तदाशंसायाः—तदभिलाषस्य प्रयोगः यदि बहुकालमहं जीवेयमिति । अयं हि संलेखनावाननशनप्रतिपन्नः

कश्चिद्वस्त्र-माल्य-पुस्तकवाचनादिपूजादर्शनात् बहुपरिवारावलोकनाल्लोकश्लाघाश्रवणात् सङ्घादिधार्मिकजनोपबृंहणाच्चैवं मन्येत यथा जीवितमेव श्रेयः प्रतिपन्नाऽनशनस्यापि यत एवंविधा मदुद्देशेन विभूतिर्वर्तत इति । मरणाशंसाप्रयोगः कर्कशक्षेत्रप्रतिपन्नानशनः कश्चित् प्रागुक्तस्वरूपपूजाद्यभावे रोगपरीषहबाधितो वा भावयत्यसौ यदि शीघ्रं म्रियेऽहमिति । चशब्दात् कामभोगाशंसाप्रयोगो दृश्यः । तत्र कामौ शब्द-रूपे भोगा गन्ध-रस-स्पर्शास्तेषामाशंसा यदि मे मानुष्यकाः कामभोगा दिव्या वा सम्पद्यन्ते तदा साध्विति कामभोगप्रार्थनाविकल्परूपः । तथा हि—

सद्दा रूवाइ रसा, गंधा फासा मणोरमा मज्झ । तवसोऽणुभावओ च्चिय, हवंतु जम्मंतरम्मि फुडं ॥ १५५ ॥

यद्वा तेषामपि कामभोगानां प्रसाधिकां नृपादिपदवीं प्रार्थयते, यथा भूतघवलात्यन्तो नत्तसामन्तपृथुपदातिवर्गः अन्तःपुर-पुर-देशादिस्वामी सौभाग्यमन्दिरं रूपकुलगृहं लावण्यकलाकलापयुक्तस्तपोऽनुभावतो जन्मान्तरे पृथ्वीपतिरहं स्यामित्यादि । एष पञ्चविधोऽतिचारः 'मा' निषेधे 'मह्यं' मम भूयात् । तात् मरणान्ते संलेखनाकालावधिचरिमोच्छ्वास इति । उपलक्षणं चैतद् अन्यथा सर्वमप्यनुष्ठानं निराशंसमशेषकर्मक्षयायैव कर्तव्यम् । तदुक्तम्—

आशंसया विनिर्मुक्तोऽनुष्ठानं सर्वमाचरेत् । मोक्षे भवे च सर्वत्र, निस्पृहो मुनिसत्तमः ॥ १५६ ॥

महादोषनिदानं चेदं राजादिऋद्धिप्रार्थनारूपं निदानम् । यतः—

सुमहं पि तवो चिन्नं, सुदीहमवि पालियं सुसामण्णं । तो काऊण निगाणं, मुहापहारेति अत्ताणं ॥ १५७ ॥

प्राग्भवे कृतनिदानस्य ब्रह्मदत्तचक्रिण इव सप्तमनरकपृथ्वीगमनतो दुःखाय निदानम् । अन्यच्च—

उड्ढगामी रामा, केसव सव्वे वि जं अहोगामी। तत्थ वि नियाण कारणमओ य मइमं इम वज्जे ॥ १५८ ॥

इति गाथार्थः ॥३३॥ इहातिचारः सर्वोऽपि योगत्रयनिबन्धनो निमित्तान्तराभावात् तेनासौ कायिको वाचनिको मानसिकः सायोगिकश्च। तत्र शङ्काद्य कालातिक्रमणादयोऽनुपयुक्तगमनादयो बन्धवधादयोऽतिचाराः केचन कायेन कृता, केचन वाचा, केचन मनसा। तथान्ये संयोगादेर्द्विकरूपास्तेषामेव तांश्चातिचारांस्त्रिभिरपि योगैः प्रतिक्रामन्नाह–

काएण काइयस्सा, पडिक्कमे वाइयस्स वायाए। मणसा माणसियस्सा, सव्वस्स वयाइयारस्स ॥ ३४ ॥

व्या०–कायेन औदारिकशरीरेण आकुट्टिकया दर्पतः प्रमादतो वा प्राणातिपातादीनामन्यतरमतिचारं कायेनोत्पन्नं तस्य कायेनैव प्रतिक्रमणम्। कथं? किल कश्चिद्वधबन्धाद्यतिचारपदं कायेन प्राप्तस्ततोऽपुनःकरणतया श्रुतसंवेगयुक्तो गुरुसमक्षमालोचयति अमुकं प्रायश्चित्तमेव जातमिति तदनु गुरवो द्रव्यं क्षेत्रं कालं भावं पुरुषप्रतिसेवनां च प्रतीत्य यत् किञ्चित् तपस्तस्योपदिशन्ति तत् तथैव ग्लान्या सेवते एतदेव तस्य प्रतिक्रमणं कायेन तपसः करणात्। यद्वा सामान्येन सर्वमप्यनुष्ठानं कर्मणां दुश्चीर्णानां निर्जराय कायप्रतिक्रमणं चैव। तथा वाचा निवृत्तो वाचिकोऽतिचारस्तस्य वाचा प्रतिक्रमणम्। कथं? अनाभोगतः सहसात्कारेण वा "हणसु बंधसु" त्ति वा इत्यादि किञ्चिज्जल्पित्वा भूयः प्रत्यागतचेतनो मिथ्यादुष्कृतं कुरुते। यद्वा कस्यापि केनचित् सार्धं कषायोदयात् परस्परमसभ्यवचनादिभिरधिकरणमुत्पन्नं पश्चाद्गुरूपदेशतः आत्मनः क्षयोपशमेन तत्समक्षं मिथ्यादुष्कृतं कुरुते। तथा मनसि भवो मानसिकस्तस्य मनसा प्रतिक्रमणम्। कथं? मनसा कस्यापि प्रद्वेषवशाद्वधबन्धादिकं चिन्तयति, अलीकेन वा एनं बध्नामि,

निधिं वा दृष्ट्वा गृह्णामीति सङ्कल्पयति, स्त्रीरत्नं वाऽलङ्कृतविभूषितमभिलषतोऽधिकपरिग्रहे वा मूर्च्छाभावमध्यवस्येत्। इत्यादि मनसा कृतस्य पापस्य मनसैव "हा दुट्ठु चिंतयं" ति भूयो भूयः संवेगः करणम्। तदेवं कायेन कृतस्य कायेन, वाचा भाषितस्य वाचैव, मनसा चिन्तितस्य मनसैव 'सर्वस्य' निरवशेषस्य व्रतानां–प्राणातिपातादीनां अतिचारस्य–मालिन्यहेतोर्वधबन्धादिरूपस्य जातिप्रधानत्वान्निर्देशस्य विभक्तिपरिमाणाच्च सर्वेभ्यो व्रतातिचारेभ्यः प्रतिक्रमामि–निवर्तेऽहमिति गाथार्थः ॥ ३४ ॥ एवं तावत् सामान्येन मनोवाक्कायैः प्रतिक्रमणमुक्तम्, सम्प्रति कायगतमेवानुष्ठानं प्रतीत्य वितथासेवनाऽश्रद्दधानादौ प्रतिक्रमणमाह—

वंदणवयसिक्खागारवेसु सन्नाकसायदंडेसु। गुत्तीसु य समिईसु य, जो अइयारो तयं निंदे ॥ ३५ ॥

व्या०—वन्दनं द्विविधं देववन्दनं गुरुवन्दनं च। अनेन दर्शनशुद्धिर्दर्शिता। तत्र देववन्दनं द्विविधं द्रव्यतो भावतश्च। तत्र द्रव्यतश्चैत्यवन्दने गृहिणोऽयं विधिः यत् स्नातेन शुचिभूतेन श्वेतवस्त्रविभूषिताङ्गेन सर्वद्ध्याऽऽयतनगमनम्। यदाह—सव्वाए विभूईए सव्वेणं बलेणं सव्वेणं वाहणेणं एवं उवागच्छमाणो पभूयं कम्मक्खयं करेइ त्ति। विधिना प्रवेशश्च कार्यः। तत्रायं विधिः—

सचित्ताणं दव्वाणं विओसरणयाए, अचित्ता(णं) दव्वाणं अविमोयणयाए, एगसाडिएणं उत्तरासंगेणं, सावियाए पुण सविसेसियाए सीसदुवारियाए निमणा एगाय जट्ठीए ॥ चक्खुफासे अंजलिपग्गहेणं मणसो एगत्तीकरणेणं आयाहिणपयाहिणं करित्ता पविसिज्जा तत्थ गब्भहरे त्ति। तत्र चायं विधिः—

पसढिलपलंबलोला, णेगा मे सा अणेगरूवधुणा । कुणइ पमाणे पमायं, संकियगणणोवमं कुज्जा ॥ १७० ॥

इत्याद्यतिचारः । तथा—

दुओणयं अहाजायं, कीकम्मं वारसावयं । चउस्सिरं तिगुत्तं च, दुपवेसं एगनिक्खवणं ॥ १७१ ॥

एतद्विपर्ययादतिचारः, तथा "अणाढियं च थद्धं च, पविद्धं परिपिण्डियं" इत्यादि द्वात्रिंशद्दोषसङ्ख्यो योऽतिचारः । तथा "वयसिक्खागारवेसु" त्ति व्रतानि, पौरुष्यादिप्रत्याख्यानरूपा नियमाः । यद्वा वयाइं अणुव्वयगुणव्वयाइं, सिक्खाओ चत्तारि एतेषु मध्येऽणुव्रतानि यावत्कथिकानि सकृद्गृहीतानि यावज्जीवमपिभावनीयानि न तु नियोगतो यावज्जीवमेवेति गुरवो व्याचक्षते प्रतिचातुर्मासिकमपि तद्ग्रहणम्, वृद्धपरम्पराऽऽयातनथासामाचार्युपलब्धेः। शिक्षाव्रतानीत्वराणि तत्र प्रतिदिवसानुष्ठेये सामायिकदेशावकासिके पुनः पुनरुच्चार्यत इति भावना । पोषधोपवासातिथिसंविभागौ तु प्रतिनियतदिवसानुष्ठेयौ न प्रतिदिवसमाचरणीयौ इतीत्वरत्वं शिक्षाव्रतानाम् । वयाइं च सिक्खाओ य वयसिक्खा तासिं गारवहेऊभूयाओ कारणकज्जोवयाराओ, गरुयस्स भावो गारवं, तं कारंतीउ दंसणमाइयाओ एगारसपडिमाओ वयसिक्खासु समोयरंति । तत्थ सामाईयपडिमा अवस्सं नियमकालकरणीयत्तणेण सामाईयसिक्खं गुरुइं करेइ । एवं पोसहपडिमा पोसहसिक्खं, अबंभपडिमा वि पोसहसिक्खं गरुइं करेइ । सच्चित्तवज्जणपडिमा उवभोगवयं गरुइं करेइ । आरंभवज्जणपडिमा सव्वपोसहसिक्खं गरुइं करेइ । पेसणवज्जणपडिमा देसावगासियसिक्खं गरुइं करेइ । उद्दिट्ठवज्जणपडिमा उवभोगवयं गरुइं करेइ । समणभूयपडिमा "चरमे सामाईयं नियमा" इति वचनात्

सम्यगोमहमिरागं गमई करेइ । पडिमाविहागा पडिमा काउस्सग्गं गए ? करेइतीत्ति "पाणिवहाई सुविणे, सयमहुसगे पउत्थम्मि" त्ति वचनात् अतिचारकायोत्सर्गं शुल्कं कुर्वती व्रतेषु पातितेनि न दोषः । तत्र योऽतिचार । अन्ये तु "सिक्खा गारवेसु" त्ति विभक्ते व्याख्यानयन्ति, यथा—तत्र शिक्षा द्विविधा, ग्रहणे आसेवने च । तत्र ग्रहणशिक्षा सूत्रग्रहणरूपा, आसेवनशिक्षा साधुसमाचारीरूपा । यदुक्तम्—

सिक्खा दुविहा नेया, गहणे आसेवणे य नायव्वा । गहणे सुत्ताहिज्जण, आसेवण(णे) कप्पतेण्णाई (?) ॥१७२॥

शिक्षायां गौरवम् उपादेयत्वे कालाद्याराधनात्, शिक्षायां वा गौरवं बहुमानः उपलक्षणं चैतद्गुणानादेः तत्र योऽतिचारः । अथवा गारवाणि ऋद्धि-रस-सातभेदात् ऋद्धिगारवः—ज इड्ढीए पयामत्तणपरिवाराईए मज्जइ । धम्म-विसयं पि बहुसं न कार्यं गमः । इहैव सद्धर्माभिलक्षणपर्यस्य लघुत्वहेतुत्वेन कुशार्णभद्रस्येव । तहा रसा—सिद्धमहुराइ-रसाणाईया तेसु गिद्धी रसगारवो । एषो महादोष आर्यमङ्गुसूरेरिव । साते—सुखं मृदुशय्याऽऽसनादिसेवनम्, सीय-च्छायान्हाणअंगणाइयीहणी इयाइ, तेसु गिद्धी सायागारवो । तत्थ दोसा शशिराजस्येव । स चापरित्यक्तकामभोगः सम्पोष्य मद्यपानमांसाहारैः शरीरं, कृत्वाऽनेकप्राणिघातं, समुपार्ज्य नरकगतियोग्यं कर्म, मृत्वा समुत्पन्नो रत्नप्रभा-पृथिव्यां नारकः । एवं सायागारवो अनर्थफलोऽतिचारता च निरपेक्षप्रवृत्तेः । तथा सञ्ज्ञाश्चतस्रः आहार-भय-मैथुन-परिग्रहभेदात् । आहारसञ्ज्ञा आहाराभिलाषः । भयसञ्ज्ञा यत् सकारणमकारणं वा त्रासः समुत्पद्यते । मिथुनस्य—स्त्रीपुरुषस्य भावो मैथुनं तत्र सञ्ज्ञा वेदोदयः, सा च चितमांसशोणितया प्रायः स्यात् । धनधान्यादिषु मूर्च्छाभि-

लापः परिग्रहसञ्ज्ञा। दशधा वा सञ्ज्ञा। एतासु चतसृषु क्रोध-मान-माया-लोभ-ओघ-लोकसञ्ज्ञाषट्कमीलनात्। कषः-संसारस्तस्यायः-लाभो येभ्यस्ते कषायाः क्रोधाद्याः सत्कर्मतया द्वादश, देशविरतस्योदयप्राप्तास्तृतीयकषायाः सदैव तद्विपाको-विकारोऽतिचारहेतुः। "दंडेसु" त्ति दण्ड्यते निगृह्यते यैः प्राणी ते दण्डाः, धर्मवित्तापहारिणोऽशुभमनोवाक्कायरूपास्त्रयः। यद्वा दण्डा,मिथ्यादर्शनशल्य-मायाशल्य-निदानशल्यरूपास्त्रयोऽत्र तेषु। "गुत्तीसु य" त्ति मनोवाक्काया एव सुप्रणिहिताः-सुप्रयुक्ताः गुप्तयो भण्यन्ते। तत्र मानसा अदंवितदं न चिन्तयति। वाचा खरनिष्ठुरमसम्बद्धं न भाषते। कायेन हस्तपादाद्यङ्गं यतस्ततो न निक्षिपति इत्येवं यत्नानुष्ठितं तिसृषु सोऽतिचारः। "समिईसु य" त्ति समितिषु ईर्यासमित्यादिषु पञ्चसु। तत्र ईरणं ईर्या-मार्गे गमनं तत्र सम्यग् इतिः-प्रवृत्तिर्युगमात्रन्यस्तदृष्टिकस्य ईर्यासमितिः। तथा भाषया मित-मधुर-गम्भीरार्थसारया विकथादिदोषरहिततया निरवद्यया कार्यार्थनिमित्तया भाषणं भाषासमितिः। एषणासमितिर्नाम उद्गमोत्पादनादिदोषविशुद्धपिण्डस्य ग्रहणम् अशुद्धस्यापरत्वप्यग्रहणम्। तथा भाण्डमात्रस्याऽऽदाने निक्षेपणे चक्षुषा प्रत्युपेक्ष्य रजोहरण-वस्त्रादिना प्रमृज्य च ग्रहणं आदानभाण्डमात्रनिक्षेपणासमितिः। तथोच्चारप्रस्रवणादिपरिष्ठापनं सूत्रोक्तविधिना रात्रावपि चतुर्विंशतिस्थण्डिलप्रत्युपेक्षणं चेति पञ्चमी समितिः। एतासु यः अतिचारः मालिन्यकरणं तकं निंदे त्ति। अन्यस्तु व्याचष्टे गुप्तीनां तिसृणां सुतः पञ्चानां समितीनां सुतः अष्टप्रवचनमातृप्रसूतचारित्राख्यो धर्मपुत्रः तत्र योऽतिचार इति गाथार्थः ॥ ३८ ॥ साम्प्रतं सम्यग्दर्शनमहात्म्योपदर्शनाय सम्यग्दृष्टेः कथञ्चित् पापाचरणेऽप्यल्पबन्धतां सहेतुकामुपदर्शयन्नाह—

सम्मद्दिट्ठी जीवो, जइ वि हु पावं समायरइ किंचि । अप्पो से होइ बंधो, जेण न निद्धंधसं कुणइ ॥३६॥

व्या०—सम्यग् अविपरीता यथावस्थितजीवादिवस्तुदर्शित्वेन दृष्टिः-मतिः सद्बोधो वा यस्य जीवस्य स सम्यग्दृष्टिः, 'यद्यपि' स जीवोऽप्रत्याख्यानादिकषायोदयेन कथञ्चिन्निर्वाहादिना कारणेन पापहेतुत्वात् 'पापं' कृष्यादिरूपं सव्यवहारादौ परविश्वासापहारादिकं वा 'समाचरति' विधत्ते 'किञ्चित्' अन्यतरत् स्तोकं वा 'हुः' अथ तथापीत्यर्थे अव्ययानामनेकार्थत्वात्, तेन तथापि 'अल्प' स्तोकः "से" तस्य सम्यग्दृष्टेः 'भवति' सम्पद्यते 'बन्धः' ज्ञानावरणादिकर्मणां प्रबन्धः प्रथमगुणस्थानकबन्धापेक्षयाऽल्पताऽस्य बन्धस्य दृश्या । अथ हेतुमाह-'येन' यस्मात् 'निर्ध्वंसं' निर्दयं कुरुते पापम्, यद्वा "निद्धंधसो" त्ति पाठे तदासौ निर्ध्वंधसः निःशूकः करोति पापव्यापारं किन्त्वसौ यतनयैव कुरुते "परिशुद्धजलग्रहणम्" इत्यादिकया । अतः सापेक्षस्य यतनया कुर्वाणस्याल्प एव कर्मबन्धो भवति, सम्यग्दृष्टेः कृपापरत्वात् तदितरस्य मिथ्यादृष्टेरज्ञानस्य निःशूकतया बहुबन्धकत्वात् इति गाथार्थः ॥ ३६ ॥ ननु सक्षिकापक्ष्माग्रस्यापि विप[य]स्य विषमा गतिः । ततश्च स्तोको(कार)ऽपि कर्मणां बन्धानुसारभवदुःखनिदाने भविष्यति तत् किं तस्य प्रतिक्रमणाद्यनुष्ठानेन ? नैतदेवं यतः सूत्रकार आह—

तंपिहु सपडिकमणं, सपरियावं सउत्तरगुणं च । खिप्पं उवसामेई, वाहि व्व सुसिक्खिओ विज्जो ॥ ३७ ॥

व्या०—तच्छब्दः पूर्ववस्तुपरामर्शी यत् तेन सम्यग्दृष्टिना कृपानुगतेन कृतमल्पपापं तदपि 'हुः' अवधारणेऽप्ये

योऽध्यते । सह प्रतिक्रमणेन–षड्विधावश्यकरूपेण वर्तत इति सप्रतिक्रमणं मिथ्यादुष्कृतमिति युक्तं वा । सपरितापं–हा विरूपमनुष्ठितमिति पश्चात्तापानुगं 'सोत्तरगुणं' गुरूपदिष्टप्रायश्चित्तचरणानुगं 'चः' समुच्चये 'क्षिप्रं' शीघ्रमुपशमयति भस्मच्छन्नाग्निवद्विष्कम्भितोदयं (निष्प्र)तापं करोत्येवेत्यर्थः । दृष्टान्तमाह—व्याधिमिव सुशिक्षितो वैद्यः, यथा हि—सुशिक्षितो–रोगनिदानव्रणचिकित्सादिदेशकशास्त्रज्ञो रोगचिकित्सकः पुमान् व्याधिं–कासश्वासादिकं वमनविरेचनलङ्घननिवातसंयमनादिना साध्यरोगिण उपशमयति एवं श्रावकोऽपि प्रतिक्रमणं कुर्वाण आसकलितकर्माण्युपशमयतीति गाथार्थः ॥ ३७ ॥ अत्रैव दृष्टान्तरमाह—

जहा विसं कोट्ठगयं, मंतमूलविसारया । विज्जा हणंति मंतेहिं, तो तं हवइ निव्विसं ॥ ३८ ॥

व्या०–'यथा' इति दृष्टान्तोपन्यासार्थः । विषं द्विविधं स्थावरं जङ्गमं च । स्थावरं द्रुमाणां, जङ्गमं वृश्चिकभुजङ्गमादीनां तद्दङ्कादिगतमपि भवति । अतः प्रोच्यते 'कोष्टगतं' उदरगतं व्यासशरीरमित्यर्थः । मन्त्रा–गारुडादयो मूलानित्रपुष्यादीनाम्, अनेन तन्त्रं सूचितम्, तेषु विशारदा–विचक्षणा गुरुपारम्पर्यसततताभ्यासादिना दृष्टप्रत्ययाः 'वैद्याः' मन्त्रवादिनस्ते किं? घ्नन्ति–नाशयन्ति मन्त्रैस्तत्प्रतिघातकैः, ततः किम्? इत्याह–"तो" त्ति ततः 'तत्' पात्रं विषग्रस्तं 'निर्विषं' विषनिर्मुक्तं 'भवति' सम्पद्यते । यद्यप्यसौ विषार्तस्तेषां मन्त्राणां न तथाविधमर्थमासादयति तथाप्यचिन्त्यप्रभावतो मणिमन्त्रौषधीनां तदक्षरश्रवणेऽपि गुणः सम्पद्यते । यथा हि कस्या अपि स्थविर्याः पुत्रः कश्चिद्भुजङ्गमहिना दष्टः विषविकारस्योग्रत्वान्निश्चेष्टोऽसौ जातः, तन्माता स्थविरी सम्भ्रान्ता गारुडिकान् शब्दयति तैरपि सुबहु तं क्लेश-

पित्वा मृत इति प्रख्यापितः । गतो जनः स्वस्थानम् । तन्मातापि पुत्रशोकदुःखार्दिता एकाकिन्येव सकरुणं सदुःखं कर्णमूले स्थित्वा पुत्रं शब्दयति, पुत्र हस! पुत्र हस! त्ति । एवं पुनः पुनः प्रकुर्वत्या यामिन्यतिक्रान्ता, उद्गतोऽंशुमाली यावत्, तेन दारकेणोन्मीलिते नयने चालितान्यङ्गानि, हर्षिता स्थविरी समागताश्च गारुडिकाः पृच्छन्ति तां, किं त्वया कृतम् इति । सा ब्रूते न किञ्चिदिति केवलमहमिदमेव शब्दयन्ती स्थिता । तैरुक्तं किनाम पदः ? सा ब्रूते हस इति । तैर्ज्ञातम् अये गारुडमन्त्रबीजाक्षरमिदं तेनासौ सज्जो जातः । यथा सो रुग्णो अवियाणमाणीए वि नामपयजण-मिसेण निव्विसो जाओ त्ति इति श्लोकार्थः ॥ ३८ ॥ दार्ष्टान्तिकयोजनामाह—

एव अट्ठविहं कम्मं, रागदोससमज्जियं । आलोयंतो य निंदंतो, खिप्पं हणइ सुसावओ ॥ ३९ ॥

व्या०—एवंशब्दः पूर्वप्रदर्शितनिदर्शननिर्देशवाची । अष्टौ ज्ञानावरणादयो 'विधा' भेदा यस्य तदष्टविधम् । किं तत् कर्म प्रमादादिभिर्हेतुभिः क्रियते इति कर्म । किम्भूतं तद् 'रागद्वेषसमर्जितं' रागः—अभिष्वङ्गलक्षणो द्वेषः—मत्सरः ताभ्यां समर्जितं—बद्धं यच्च प्रमादादिहेतुपरिहारेण रागद्वेषयोर्हेत्वोरुपादानं तत्प्राधान्यख्यापनार्थम् । तथा च,

स्नेहाभ्यक्तशरीरस्य रेणुना श्लिष्यते यथा गात्रम् । रागद्वेषात् क्लिन्नस्य कर्मबन्धो भवत्येवम् ॥ १७३ ॥

तदेवंविधं कर्म 'आलोचयन्' स्वदुश्चरितकथनेन गुरुसमक्षं, यथावृत्तं 'निन्दन्' हा अयुक्तमासेवितमिति पश्चात्तापेन 'क्षिप्रं' शीघ्रं 'हन्ति' क्षय क्षयोपशमोपशमभावेन जीवप्रदेशेभ्यो वियोज्यात्मानं विशोधयति, कः ? सुश्रावकः, सुशब्दः पूजार्थे, तेन कृतकर्मताशीलत्वादिगुणगणसूचनेन अन्यश्रावकस्यैतद्गुणवियुक्तस्य व्यवच्छेदः कृतो भवति ।

अत्र वैद्यसमः श्रावको मन्त्रमूलस्थानीयेन प्रतिक्रमणेन विषसमं कर्म जीवप्रदेशकोष्टगतं हन्तीति श्लोकार्थः ॥ ३९ ॥

एनमेवार्थं विशेषेण प्रतिपादयन्नाह—

**कयपावो वि मणूसो, आलोईय निंदिओ गुरुसगासे। होइ अइरेगलहुओ, ओहरियभरो व्व भारवहो ॥४०॥**

व्या०—पायति-शोषयति पुण्यं, पांशयति वा-गुण्डयति जीववस्त्रमिति पापं-द्व्यशीतिसङ्ख्याऽशुभकर्मप्रकृतिरूपं तद्धेतुकं हिंसानृताद्यनुष्ठानमपि पापं, कृतं पापं येन स कृतपापः 'मनुष्यः' मर्त्यः एतद्ग्रहणं च मनुष्यस्यैव देशविरतियोग्यतया प्रतिक्रमणार्हत्वख्यापनार्थम्। तत्र "विरई मणुस्सलोगे, विरई य तिरिएसु" त्ति वचनात् यद्यपि तिरश्चोऽपि देशविरतिर्भावनया भवति, तथापि न तस्य प्रतिक्रमणादिसदनुष्ठानयोग्यतेति मनुष्यग्रहणम्। आलोचितं-गुरुपुरतो निजदोषप्रकाशनं, निन्दितं-मिथ्यादुष्कृतमित्याद्यभिधानं यस्यास्ति स आलोचितनिन्दितः अर्शाआदिपाठात्, कृतालोचननिन्दाप्रकारः, क? इत्याह—'गुरुसकाशे' गुरुसमीपे, गुरुसमक्षं विनाऽऽलोचनायामात्मनैव क्रियमाणायां शुद्ध्यभावादालोचनानिषेधमाह गुरुसद्भावे सति अपवादतो रोगाद्यवस्थायां गुरोरप्राप्तौ सिद्धादिसमक्षमालोचयतोऽपि शुद्धिः। ततः किम्? इत्याह-भवति अतिरेकलघुकः भारमाश्रित्य अतिशयेन पूर्वावस्थातोऽपि लघुकः। किम्वदित्याह-अपहृतभर इव भारवाहः, इदमुक्तं भवति-भारवाहो भरोत्क्षेपात् पूर्वं तावल्लघुः किन्तु न तादृक् यथा भारमुत्पाट्य प्राप्य च कियन्तमपि प्रदेशं शीर्षस्कन्धपृष्ठादिभ्य उज्झन् एवमसावपि प्रतिक्रामको न तादृग्लघुतामनुभवति प्राग् यादृग्विधामतिचारालोचनप्रतिक्रमणादूर्ध्वम्। यद्येवमतीचारासेवनं श्रेयो धर्मार्थिनः कथमन्यथालोचननिन्दनसम्भवः,

तदभावात् कथमत्यन्तलघुता इति । तदसत्, लोके यथा नीरोगस्य गलत्कुष्ठोद्भवे सुवैद्यचिकित्सातो देहपाटवमनुभवतो महान् हर्षातिरेकः स्यात् न च नीरोगावस्थायामादौ स आसीत् । यथा वा वणिज उद्धारकं प्रयच्छतो नष्टद्रव्यस्य त्रिभागमात्रमपि मौलिकस्य लभमानस्य प्रमोदातिरेकः, यथा वा द्यूतकारस्य बहुतरद्रविणहारेण पुनर्लभमानस्य हर्षातिरेक एवमिहापीदमिति कथं भग्नचारासेवनं श्रेयः? उत्साहकं चेदमिति न दोष इति गाथार्थः ॥ ४० ॥ एवं श्रावकस्याऽऽलोचननिन्दनाभ्यां गुरुकर्मणो लघुकर्मता स्यादित्यभिहितम् । सम्प्रत्यावश्यकस्य मोक्षलक्षणफलप्रापणद्वारेण माहात्म्यमाह—

आवस्सएण एएण सावओ जइ वि बहुरओ होइ । दुक्खाणमंतकिरियं, काही अचिरेण कालेण ॥ ४१ ॥

व्या०—तत्रावश्यं कर्तव्यमिति आवश्यकम् । यदुक्तम् "समणेण सावएण य" इत्यादि गाथा । गुणानां ज्ञानादीनाऽऽवासयत्यात्मनि इत्यावासकं वा । तेनावश्यकेनाऽऽवासकेन वा षडध्ययनासेवनलक्षणेनानेन श्रावकसम्बन्धिना न यतिसत्केन तस्य तत्रानधिकाराद् यतीनां च तत्सत्केऽनधिकारः । 'श्रावकः' प्रागुक्तशब्दार्थः यद्यपि तथाविधभवितव्यतावशेन बहुरजा भवति, तत्र रजयति-मलिनयति ज्ञानादिविशुद्धजीवकमिति रजः बध्यमानं कर्म, तच्चाकषायं स्तोकमपि भवति उपशान्तक्षीणमोहसयोगिकेवलिनाम् । अतः सकषायजीवेन बहु बध्यते इति अतः श्रावको बहुरजा बहुबध्यमानकर्मा यद्यपि भवति तथापि इत्यध्याहाराद् दुःखानां शारीर-मानसानां 'अन्तक्रियां' पर्यन्त निष्ठा करिष्यति । अ(न)न्तरोक्तावश्यककरणेन, कियता कालेन 'अचिरेण' स्तोकेन तद्भावनादिना । इह चान्तक्रियाया अन-

न्तरकारणं यथाख्यातं किल तथापि परम्पराकारणमिदमपि भवति। 'यदि वा'—यद्यपि बहुरतः—नानासावद्यारम्भासक्तस्तथापि यतिवृत्तादौ हृद(य)रूपत्वादस्यानेनावश्यकेनाभ्यस्यमानेन सात्मीकृत्य चारित्रं दुःखानाम् 'अन्तक्रियां' विनाशं करिष्यति। यद्वा यद्यपि वधूरतः (न) ब्रह्मचर्यं पालयितुं समर्थः तथाप्यावश्यकेनानेन यतिवृत्तपक्षपालादतिचिरेणैव कालेन ततो विरक्तो भूत्वा सर्वविरतिमासाद्य सम्यग्भावनया निष्कलङ्कं श्रामण्यं परिपाल्य, केवलज्ञानमुत्पाद्य मोक्षं यास्यतीति दुःखक्षयं करिष्यतेऽसाविति गाथार्थः ॥ ४१ ॥ इदानीं सर्वस्य दुरालोचितदुष्प्रतिक्रान्तस्यातिचाराणामपि प्रचुरत्वात् प्रमादवशात् ते च गुरोरनालोचिता न शुद्धयन्ते आवश्यककाले आलोच्यमाना न स्मृताः, आलोचना च बहुविधा, सकलप्रमादस्थानगोचरत्वात् तस्या, न च विस्मृता आलोचयितुं शक्या अतिचाराः, ततस्तेषामपि सामान्यतया प्रतिक्रमणमाह—

आलोयणा बहुविहा, न य संभरिया पडिक्कमणकाले। मूलगुणउत्तरगुणे, तं निंदे तं च गरहामि ॥४२॥

व्या०—आलोच्यत इत्यालोचना गुरुसमक्षं स्वदुश्चरितप्रकाशनं, उपचारात् तत्कारणभूता प्रमादक्रियाऽप्यालोचना। तथा च यतयो वदन्ति—प्रायश्चित्तं मे जातमिति। कथम्भूता सा 'बहुविधा' अनेकप्रकारा तद्धेतूनां बहुत्वात् अतो न 'संस्मृता' उपयोगपरस्यापि नावगता 'प्रतिक्रमणकाले' निन्दा-गर्हावसरे प्रतिक्रमणस्य हि द्वौ कालौ सूर्योदयोऽस्तमनं च। सूर्योदयात् प्रागन्तर्मुहूर्तमात्रोऽसौ अस्तमने चावश्यके कृते साधूनुद्दिश्य यथा सन्ध्याविगमो भवति; एवं गृहिणोऽप्युत्सर्गत एष एव कालः, अपवादेन[न] च वृत्तिक्रियानुपरोधिनाऽन्यथापि क्वचिद्विषये, काऽऽलोचना इत्याह

"मूलगुणउत्तरगुणे" तत्र मूलगुणा(ः) पञ्चाणुव्रतानि उत्तरगुण(ाः) सप्तशिक्षाव्रतानि तद्विषयमालोचनायोग्यमतिचारं "निंदे" त्ति आत्मसाक्षिक जुगुप्सामि, तमेव 'गर्हे' गुरूणा निवेद्य प्रायश्चित्त करोमीति गाथार्थः ॥ ४२ ॥ एवमसौ प्रतिक्रामक आसनोपविष्ट एवैतावत् सूत्र पठित्वा, तत उपरि योगमुद्रा विरचय्य पादयोर्जिनमुद्रां विधायावनतोत्तमाङ्गो मङ्गलगर्भमिदमाह—(तस्स धमस्स केवलिपन्नतस्स)

अब्भुट्ठिओ मि आराहणाए विरओ विराहणाए य । तिविहेण पडिक्कतो, वंदामि जिणे चउवीसं ॥४३॥

व्या०—'अभ्युत्थितोऽस्म्याराधनाया' तस्य धर्मस्य केवलिप्रज्ञप्तस्य उद्यतोऽहं सम्पूर्णलाभार्थं 'विरतो विराधनायाश्च' निवृत्तः खण्डनायाः 'त्रिविधेन' मनसा वाचा कायेन 'प्रतिक्रान्त ' निवृत्तः'वन्दे' स्तौमि 'जिनान्' तीर्थकरान् 'चतुर्विंशतिं' चतुरधिकां विंशतिं ऋषभादि-महावीरपर्यन्तानां चतुर्विंशतेस्तीर्थङ्कराणां क्षेत्रकालासन्नत्वेन विशेषोपकारख्यापनार्थं वन्दनमुक्तम् । यदि वा पञ्चभरत-पञ्चैरवतलक्षणेषु दशसु क्षेत्रेषु चतुर्विंशतिसम्भवात् चतुर्विंशतिग्रहणम्, विदेहेषु पञ्चस्वपि सततमुत्पत्तेर्न सङ्ख्यया जिना व्यवच्छेत्तु शक्या' तेन तत्क्षेत्रभाविनो जिनानिति सामान्येनोक्ता तद्वन्दना एव "चउवीसजिणविणिग्गयकहाइ वोलिंतु मे दियहा" इत्यप्येषमेव वक्ष्यमाणमनवद्यम् । यत् तु "तिविहेणपडिक्कंतो वदामि जिणे चउवीसम्" इति भूयोऽप्यन्ते पठ्यते तत् त्वनेन तुल्यसमाधानं । जिनानिति सामान्येनोक्ता भरतादिप्रभवाः चतुर्विंशतिग्रहणेन जिना वन्द्यते इति गाथार्थः ॥ ४३ ॥ एवं चतुर्विंशतिजिनवन्दनं कृत्वा सम्प्रति सम्यक्त्वविशुद्ध्यर्थं त्रैलोक्यगतानां शाश्वताशाश्वतचैत्याना वन्दनायाह—

जावंति चेईयाइं, उड्ढे(अ) अहे य तिरीय लोए य। सव्वाइँ ताइँ वंदे, इह संतो तत्थ संताइं ॥ ४४ ॥

व्या०—तत्र लोकस्त्रिविधः ऊर्ध्वाधस्तिर्यग्लोकभेदात्। तत्र 'चैत्यानि' चित्तप्रणिधानहेतूनि जिनबिम्बानि तानि 'ऊर्ध्वं' सुरविमानेषु अनेन भगवताममरैरपि वन्द्यत्वमाह 'अधः' भुवनपति-व्यन्तर-भुवन-नगरेषु अनेन तद्वन्द्यतामाह 'तिर्यक्षु' ज्योतिष्कविमान-द्वीपा-ऽचल-ग्राम-नगरादिषु शाश्वतान्यशाश्वतानि च चक्रवर्त्यादिकारितानि अनेनापि तद्वन्द्या भगवन्त इत्याह। सर्वेणापि चानेन त्रिलोकपूज्यत्वमावेदयति भगवतामिति। 'सर्वाणि' निरवशेषाणि 'तानि' अनन्तरोक्तानि 'वन्दे' स्तौमि "इह संतो" त्ति अत्र स्थितः 'तत्र' तेषु स्थानेषु स्वप्रदेशेषु 'सन्ति' विद्यमानानि वन्दे। यद्वा 'इह' अत्र 'सन्' सद्भूतश्चित्ताचेतनादिना ज्ञानात्मा 'तत्र' ऊर्ध्वलोकादौ 'सन्ति' विद्यमानानि अतीतानागत-वर्तमानाशेषपदार्थाविसंवादिकेवलज्ञानोपलब्धत्वाद् घटादिवत्। इति समस्तार्हद्वन्दनानिवेदकगाथासमासार्थः ॥ ४४ ॥

समस्तजिनवन्दनं कृत्वा सम्प्रति सर्वक्षेत्रगतसाधुवन्दनायाह—

जावं[ ]त केवि साहू, भरहेरवए महाविदेहे य। सव्वेसि तेसि पणओ, तिविहेण तिदंडविरयाणं ॥ ४५ ॥

व्या०—'यावन्ति(न्तः)' यावत्प्रमाणाः केचित् 'साधवः' जिन-स्थविरकल्पादिस्थिता भरतैरवतमहाविदेहेषु पञ्चदशसु कर्मभूमिषु चशब्दाद् अकर्मभूमिषु च संहरणादिना सर्वेषां तेषां 'प्रणतः' कृतप्रणामः 'त्रिविधेन' मनोवाक्कायेन त्रिभ्यो दण्डेभ्यः—उक्तस्वरूपेभ्यो विरताः—निवृत्तास्त्रिदण्डविरतास्तेषाम्। इह पञ्चदश कर्मभूमिर्मुक्त्वा त्रिंशदकर्मभूमिषु नास्ति धर्माधर्मविभागः केवलं युगलधर्म एव। कर्मभूमिषु च जिनाश्चक्रवर्तिनो वासुदेव-बलदेवाः सन्ति